इन्द्रस्य शाप मोक्षाख्यमध्यायं सर्वकामदम् ।
मन्त्रभूतं जपेद्यस्तु सर्वलोकेषु पूज्यते ।। ६१
पुण्य पुष्करिणी यत्र वर्तते वाञ्छ्यसन्निधौ ।
पापपाशैर्न बध्यन्ते तद्देशीयाश्चैव मानवाः ।। ६२

इति श्री स्कान्दे सनत्कुमारसंहिताया मुपरिभागे
पञ्चपञ्चाशोऽध्यायः

## ।। सप्तमोऽध्यायः ।।

जाबालिः -

पुनरन्यं प्रवक्ष्यामि बृहत्सेन महामते ।
बोधितोऽहमिदानीन्तु पूर्ववृत्तान्तमद्भुतम् ।। १
विकुक्षिरिति विप्रेन्द्रो नर्मदातीरमाश्रितः ।
पाद्मे कल्पे वर्तमानो निजकर्मपरायणः ।। २
तस्य भार्या चारुमती सर्वलक्षणलक्षिता ।
सुमन्तोश्च सुता पुण्या साध्वी सर्वाङ्गशोभना ।। ३
तया सार्धं स गार्हस्थ्यमकरोत्कर्म वर्त्मना ।
देवपूजासु निरतो होमस्वाध्यायतत्परः ।। ४
मासोपवासनिरतस्त्रिकालज्ञानतत्परः ।
शिवपूजासु संसक्तो रुद्रसूक्तादिजापकः ।। ५
दान्तो जितेन्द्रियश्शान्तो मौन शीलगुणान्वितः ।
वेदवादरतो नित्यं वेदान्तज्ञानतत्परः ।। ६
नीतिशास्त्रविदां श्रेष्ठो धर्मशास्त्रविदां वरः ।
सदाचारपरो नित्यं वक्ता दशगुणस्य च ।। ७
तस्येत्थं वर्तमानस्य कस्मिन्कालविपर्यये ।
ऋषिरभ्यागतो गार्ग्यस्सदा ध्यानपरायणः ।। ८

तदा विकुक्षिर्यज्ञार्थं वारुणं लोकमाश्रितः ।
तस्य भार्या चारुमती प्रबलव्याधिपीडिता ॥ ९

चीरावकुण्ठिता शेते भूमौ सा वेदनायुता ।
सत्कारार्हं द्विजमपि न दृष्ट्वा देवमोहिता ॥ १०

दैवाद्विकुक्षिर्वरुणलोकं यज्ञाय संययौ ।
तदाऽवमानितो गार्ग्यः क्षणं स्थित्वा गृहान्तरे ॥ ११

शशाप तां भूमिशयां यक्ष्मा त्वां गृह्णतामिति ।
इति शप्त्वा क्रुद्धमना निवृत्यास्या गृहान्तरात् ॥ १२

अन्यदाश्रममभ्येत्य भुक्त्वाऽगच्छद्यथागतम् ।
सा विबुद्धा तदा दुःखाद्विललापाकुलेन्द्रिया ॥ १३

हताऽहमधुना दैवात् पूर्वपापविपाकतः ।
एवमाकुलितां तां च राजयक्ष्मा समग्रहीत् ॥ १४

कर्महीना विवर्णा सा पिशाचीव व्यवस्थिता ।
विकुक्षिरपि यज्ञान्ते स्वाश्रमं पुनरागतः ॥ १५

तथाविधां च तां दृष्ट्वा पिशाचीमिव च स्थिताम् ॥ १६

उवाच शङ्कयाविष्टो दैवमेव विचिन्तयन् ।
कथमेतत् स्वरूपं चेत्यपृच्छत्तां स्वकामिनीम् ॥ १७

माभैर्वद ममात्र त्वं शोकमोहौ त्यज प्रिये ।
चरणं मम लग्नानां भयं नास्ति सुलोचने ॥ १८

नाथेनैवं भाषमाणा वक्तुं तत्र प्रचक्रमे ।

चारुमती-

नाथ त्वयि गते लोकं वारुणं यज्ञहेतवे ॥ १९

व्याधिना पीडिताऽहन्तु तेन दुःखेन दुःखिता ।
चीरावकुण्ठिता भूत्वा निद्रया परिमोहिता ॥ २०

तदा कश्चिद् द्विजः श्रान्तः क्षुत्तृष्णापरिमोहितः ।
भिक्षार्थमागतस्सोऽथ भग्नाशस्तत्र वै गतः ॥ २१

दृष्ट्वा सुप्तामजानन्तीं मामवज्ञाय तस्थुषीम् ।
इति शापं विसृज्याशु गतवान् मध्यगे रवौ ॥ २२

तत्क्षणादेव मन्नाथ शापाग्निज्वलितो भृशम् ।
यक्ष्मरूपी महाव्याधिः सर्वांगं प्रादहत्तदा ॥ २३

अपापायामपि मयि शापं दत्वा गते द्विजे ।
तर्के पूर्वस्य पापस्य फलेनेति विधेरिदम् ॥ २४

त्वत्पादपद्म प्रवणामनाथामन्यथाकृतिम् ।
पूर्ववत्कुरु मे नाथ कृपा मयि तवास्ति चेत् ॥ २५

इति श्रुत्वा विकुक्षिस्तु ज्ञानयोगबलान्वितः ।
अचिन्तयत्तदा पत्न्याः शापमोक्षस्य कारणम् ॥ २६

तदाऽशरीरिण्याकाशे वागुवाच स्फुटाक्षरम् ।
ब्राह्मणीयं पुरा विप्र ब्राह्मणं प्राशपद्भृथा ॥ २७

तेन कर्मविपाकेन जन्मान्तरकृतेन वै ।
दशामिमां समानीता श्री वाञ्छ्ये मोक्षमेष्यति ॥ २८

इति श्रुत्वा वचस्तस्या ब्राह्मणः प्रश्रयान्वितः ।
स्त्रिया सह विनिर्गत्य श्री वाञ्छ्यं प्राप्य धर्मवित् ॥ २९

तत्र पूर्वं देहशुद्धिं कृच्छ्र चान्द्रायणादिभिः ।
कृत्वा चापगते भानौ सस्नतुस्तत्र दम्पती ॥ ३०

पुण्यपुष्करिणी तीरेऽभ्युपवासपरावुभौ ।
प्रदक्षिण नमस्कारैः स्तोत्रैः स्तुत्वा महेश्वरम् ॥ ३१

वाञ्छ्येशं पार्वतीं चापि दुर्गां महिषमर्दिनीम् ।
एवं क्रमेण तन्मासं भक्तिश्रद्धापुरस्सरम् ॥ ३२

शृण्वन्तौ क्षेत्रमाहात्म्यं दानोपकरणान्वितौ ।
कालक्षेपं प्रकुर्वन्तौ स्तोत्रपाठैश्च सादरम् ।। ३३

नानाविधाभिः पूजाभिरुपचारैरहर्निशम् ।
वाञ्छ्येशतुष्टिमिच्छन्तौ कदा मोक्षो भवेदिति ।। ३४

कदा शापाग्नयः शान्ताः स्वस्थेयं भविता त्विति ।
वयमप्यनया सार्धं कथं कर्माणि कुर्महे ।। ३५

श्री सूतः-
इति चिन्तान्वितौ तौ तु यावच्चापगतो रविः ।
तावत्तत्रैव वसतस्तदा माघः समागतः ।। ३६

तौ दम्पती समाहितमानसौ स्नानतत्परौ ।
माघस्नानं च तत्रैव चक्रतुर्व्रतमास्थितौ ।। ३७

विकुक्षिभार्या व्रतशीर्णदेहा वाताशना पर्णमयाशना च ।
पुण्याब्जिनीतीरकृताश्रमा च ह्युवास भक्त्युत्कटमानसा सा ।। ३८

विकुक्षिरप्याश्रमसन्निविष्टो नित्यं जपध्यानपरायणश्च ।
आदित्यरूपेण च वाञ्छ्यनाथमर्चन्सदा साग्निक अध्युवास ।। ३९

इत्थं भक्त्युत्कटौ दृष्ट्वा वाञ्छ्येश उमया सह ।
प्रसादाय मतिं चक्रे एतयोर्द्रष्टुमिच्छतोः ।। ४०

माघान्ते शिवरात्र्यां तु पूजान्ते स्तोतुमिच्छतोः ।
त्रिशूलाभयहस्ताढ्यः प्रादुरासीत्तयोः पुरः ।।
तौ दृष्ट्वा देवदेवेशं प्रणम्य स्तोत्रमूचतुः ।। ४१

देवं दृष्ट्वा शूलपाशासिहस्तं देव्या सार्धं भक्तचित्तार्तिनाशम् ।
नत्वा स्तुत्वा भक्तिगम्य प्रभावं दण्डाकारं वन्दयामासतुस्तौ ।। ४२

बृहत्सेनः ।
दम्पतिभ्यां कृतं स्तोत्रं वाञ्छामि श्रोतुमद्य वै ।
शापमोक्षकरं यत्तद्ब्रूहि मे रौमहर्षिणे ।। ४३

जाबालिः–

अतिगुह्यतमं राजन् सर्वपापप्रणाशनम् ।
जपतां सर्वभोगाढ्यं वक्ष्येऽहं तव शोभनम् ॥ ४४

स्वामिन् सर्वजगद्गुरो शिव महादेवेश देवोत्तरम्
प्राणाधार जगन्निवास जगतो नाथाब्धिजासोदर ।
त्वत्पादाम्बुज कोशसंश्रयजनं रक्ष त्वमद्य प्रभो
शापाग्न्या परिदाहितं पशुपते देवोत्तमैस्सन्नुत ॥ ४५

त्वं सत्वं परमं परात्परतरं त्वं सर्वसाक्षी जगद् -
धाता वाय्वनलादिरूपतनुभिर्लोकान्तरस्थः स्वयम् ।
सूर्याग्नीन्दुविलोचनस्त्वमसि हे भोगीन्द्र भूषाकृते
भूमेर्भारतमं पुरत्रयमहो हन्तासि पूर्वं हर ॥ ४६

त्वां स्तोतुं वयमल्पबुद्धि विभवा ब्रह्मादियोगीश्वराः
मर्त्यानां किमु देवदेव सकलाराध्योऽसि मन्त्रातिगः ।
दिव्यज्ञान महामुनीन्द्र हृदयेष्वन्तस्थ संविन्मय
प्रादुर्भूत समस्तलोकविभवः त्वं वै गतिर्योगिनाम् ॥ ४७

आनन्दानुभवस्वरूप सततं भासाकृते योगिनां
मायातीतमनोविलासविधिना दुर्ग्राह्य सत्वाकृते ।
सत्वाद्यैर्गुणभेदकैश्च समये सत्योऽप्यसत्याकृते
नैर्गुण्यं परमं वदन्ति कवयो रूपं सदा योगिनः ॥ ४८

आद्य त्वं करुणानिधे वरतनो विद्यामयीवल्लभ
प्राणायामरता निरस्तकुहकाः प्रत्यक्परागात्मकम् ।
ये ध्यायन्ति सदा क्रियादिसहितं दिव्याम्बरैरावृतं
वेद्यं वेदविदां विरूपनयनं तं देवमाद्यं भजे ॥ ४९

जाबालिः-

इति स्तुतो महादेवः प्रसन्न हृदयान्तरः ।
वृणीष्वेति वरं चोक्त्वा देवीमालब्य संस्थितः ॥ ५०

देवस्य वचनं श्रुत्वा दम्पती करुणानिधेः ।
याचेते शापमोक्षं च राजयक्ष्मविनाशनम् ॥ ५१

श्री वाञ्छ्यनाथः–

शापमोक्षो भवत्वद्य राजयक्ष्मा विनश्यतु ।
विरूपं च लयं यातु पुण्याब्जिन्या जलाप्लवात् ॥ ५२
इत आरभ्य नलिनी पुण्याख्या कुष्ठनाशिनी ।
शापदोषापहा चैव यक्ष्मनाशा भवत्वियम् ॥ ५३
एतस्याश्चारुमत्याश्च पूर्वरूपं भविष्यति ।
मद्भक्तिश्चाचला भूयाद्भक्तिः पुण्याब्जिनीजले ॥ ५४
इति दत्वा वरं तस्य तयोः श्रीवाञ्छ्यवासिनोः ।
पुनर्लिङ्गे विवेशाथ पश्यतोर्मुनिभार्ययोः ॥ ५५

सूतः -

विकुक्षिना कृतं स्तोत्रं यः पठेच्छाप मोचनम् ।
तस्य यक्ष्मादयो रोगा नैव जन्मनि जन्मनि ॥ ५६
एतद्विकुक्षिचरितमध्यायं यः पठेद्द्विजः ।
तत्क्षणादेव मुक्तिस्स्यादिह लोके सुखी भवेत् ॥ ५७
परत्र शिवलोके च वसेत्कल्पशतं पुनः ।
तदन्ते शिवसायुज्यं प्राप्नोति परमं पदम् ॥ ५८
राजन्पुण्यसरोजिनी विभवमप्यंहोविनाश क्षमं
तत्त्वेनोक्तमभीष्टवस्तुफलदं स्वर्गापवर्गप्रदम् ।
अन्यं श्रोतुमिहास्ति चेद्रुचिरहं वक्ष्यामि वाञ्छ्यस्थल-
प्रादुर्भावमतंद्रितेन मनसा शृण्वन्नरो मुच्यते ॥

इति श्री स्कान्देसनत्कुमारसंहितायामुपरिभागे
पञ्चपञ्चाशोऽध्यायः



## ॥ अष्टमोऽध्यायः ॥

बृहत्सेनः-

जाबाले तन्ममाचक्ष्व इदानीं सङ्ग्रहोदितम् ।
विस्तरेण ममाचक्ष्व पुण्याख्यानमनुत्तमम् ॥ १
त्वद्वचोऽमृतपानानां तृप्तिर्नैवाभिजायते ।
माघस्नानमिति ब्रह्मन् कथितं तत्कथान्तरे ॥ २
संक्षेपेणेह गदितुं भगवन् त्वमिहार्हसि ॥

जाबालिः–

राजन्माघः पापहन्ता सर्वकामफलप्रदः ॥ ३
सर्वैश्वर्य प्रदो नृणां नोक्तं तव मया पुरा ।
इदानीं कथयिष्यामि सङ्ग्रहेण न विस्तरात् ॥ ४
स्नानस्य च विधानं च कथयेऽथ दयाळवे ॥ ५
न वक्तव्यं कृतघ्नाय नास्तिकाय शठाय च ।
श्रद्धाऽस्ति धर्मश्रवणे तव भाग्यवशात्प्रभो ॥ ६
जन्मान्तरसहस्रैश्च जायते मतिरीदृशी ।
इतिहासमिमं पुण्यं दत्तात्रेयेण भाषितम् ॥ ७
कार्तवीर्याय राजेन्द्र तदिदानीं ब्रवीम्यहम् ।

दत्तात्रेयः–

विशाला नाम नगरी गुणशुभ्रा गुणान्विता ॥ ८
तस्मिन्धर्मध्वज इति वैश्यः परमधार्मिकः ।
दानधर्मरतो नित्यं यजनाध्ययने रतः ॥ ९
तस्यैवं वर्तमानस्य पुत्रप्राप्तिर्न चाप्यभूत् ।
तस्मिन्नवसरे दैवादागतो गौतमो मुनिः ॥ १०
तमर्घ्यपाद्यपूजाभिर्वैश्यस्तं प्रत्यपूजयत् ।
तेन सत्कारितो विप्रो ज्ञान दृष्ट्या विलोक्य च ॥ ११

तस्य पुत्र प्रदानाय मतिं चक्रेऽथ गौतमः ।
एहि वैश्य प्रवक्ष्यामि तव पुत्रार्थमादरात् ।। १२
उपायमद्य संचिन्त्य तच्छृणुष्व महामते ।
चोळदेशस्य मध्ये तु कावेर्या दक्षिणे तटे ।। १३
पुण्यपुष्करिणी नाम तीर्थं तत्र महत्तरम् ।
महिष्या सहितस्तस्मिन् व्रतबन्धपुरस्सरम् ।। १४
माघस्नानविधानेन स्नानं कुरु यथाबलम् ।
श्री वाञ्छ्यमिति विख्यातं त्रिषु लोकेषु विश्रुतम् ।। १५
विधानं तव वक्ष्यामि माघस्नानस्य वै फलम् ।
रविर्मकरमागच्छेन्माघमासं च तं विदुः ।। १६
किञ्चिदभ्युदिते सूर्ये मन्त्र त्रयसमन्वितम् ।
मौनेन सूर्यमुद्वीक्ष्य तर्पणं तत्र कारयेत् ।। १७
''नक्रार्के गोपिकानाथं स्मृत्वा पापप्रणाशनम् ।
स्नास्यामि देव देवेश सफलं कुरु मे प्रभो ।। १८
देव देवारविन्दाक्ष नक्रसूर्य त्रिलोचन ।
देवस्नान फलं देहि पापमोक्षं च मे कुरु ।। १९
कराळदंष्ट्रावदन कराकाद्भुतदर्शन ।
अनुज्ञां देहि मे देव माघस्नानफलाय च'' ।। २०
इति मन्त्रत्रयं चोक्त्वा स्नानकाले दिने दिने ।
माघान्ते व्रतपूर्त्यर्थं ब्राह्मणान्भोजयेत्ततः ।। २१
उक्तेनैव विधानेन स्नानं कुरु व्रतान्वितः ।
माघान्ते परमेशस्तु फलं दास्यति निश्चयः ।। २२
जाबालिः–
इति तस्य वचः श्रुत्वा गौतमस्य महात्मनः ।
तौ वैश्यदम्पती तत्र स्नातुं श्री वाञ्छ्यमागतौ ।। २३

उक्तेन विधिना सम्यक् स्नानं चक्रतुरञ्जसा ।
तयोर्माघप्रभावेण सन्तुष्टः परमेश्वरः ।। २४
प्रसादमकरोत्प्रीतः पूजया नियमेन च ।
पुत्रद्वयं ददौ तत्र तयोः पुण्याब्जिनीतटे ।। २५
तौ तु लब्ध्वा वरं देवात् सुप्रीतेनान्तरात्मना ।
भूषणानि विचित्राणि महान्ति वसनानि च ।। २६
रत्नानि चैव दिव्यानि आढ्यानि च मह्यान्ति च ।
ग्राम्याणि बहुसस्यानि ददतुस्तौ महामती ।। २७
अचिरेणैव कालेन पुत्रौ जातौ शिवाज्ञया ।
ततः कालक्रमे याते विधिना द्वादशाब्दके ।। २८
उपनीय तयोः सम्यग्वेद प्रोक्तविधानतः ।
वेदाभ्यास रतौ नित्यं पितृशुश्रूषणे रतौ ।। २९
पिता तयोररण्यं च तपसे कृतनिश्चयः ।
पुण्याख्य नलिनीतीरादुटजं तु प्रकल्प्य च ।। ३०
स्नात्वा त्रिषवणं नित्यं वाञ्छ्येशे सक्तमानसः ।
वानप्रस्थाश्रमी भूत्वा चचार तप उत्तमम् ।। ३१
कालधर्मं गतस्तत्र तत्त्वभावेन संयुतः ।
विमानं च समारुह्य शिवलोकं ययौ तदा ।। ३२
एवं माघप्रभावश्च कथितस्तव तत्वतः ।
त्वमत्र पुण्यनलिनीतीर्थे स्नानं कुरुष्व ह ।। ३३
ये माघस्नानरहितास्तेषां जन्म वृथा भवेत् ।
माघस्नानसुयुक्तस्य पुण्यराशिः प्रवर्धते ।। ३४
क्षीयते पापराशिस्तु सूर्यं दृष्ट्वा तमो यथा ।
अमाघस्नानशीला ये नैकादश्युपवासिनः ।। ३५

न पुण्य नलिनीस्नाताः कथं वत्स्यन्ति ते दिवि ॥

बृहत्सेनः–

माघस्नानस्य वा विद्वन् पुण्य तीर्थानि यानि च ॥ ३६

नदीनदाश्चे ये पुण्याः पुष्करिण्यश्च तान् वद ।

जाबालिः–

प्रयागं नैमिशं काशी केदारं पुष्करं तथा ॥ ३७

गण्डकी चन्द्र भागा च सरयूनिम्नगा तथा ।

गोदावरी भीमरथी पयोष्णी मलहारिणी ॥ ३८

रेवा रोगापहा शोणा ज्वाला माला तथैव च ।

सिन्धुर्गोदावरी चैव गिरिणी पापमर्दिनी ॥ ३९

तारा ज्वालामुखी चैव तरळा जाह्नवी तथा ।

माहेश्वरी कोमळा च गरळा पापनाशिनी ॥ ४०

वीरा विशाला भोगाढ्या विमला निर्मला तथा ।

तुङ्गभद्रा च कृष्णा च वेणिका प्रहरा हरा ॥ ४१

प्रभासं हेमकूटं च पाञ्चजन्यसरस्तथा ।

कुरुक्षेत्रं ज्ञानकुण्डं सर्वपापविमोचनम् ॥ ४२

पिशाचमोचनं तीर्थं श्रीमत्पाताळजाह्नवी ।

कृष्णासमुद्रसंयोगं मकरीस्थलमेव च ॥ ४३

गौरी कामसरश्चैव विरूपाक्षमतः परम् ।

वेगानन्तसरश्चैव गुप्तभारतिरेव च ॥ ४४

अमृता पापहा चैव कावेरी च मरुद्वृधा ।

जम्बुपुष्करिणी चैव चन्द्रपुष्करिणी तथा ॥ ४५

पालाशतीर्थमित्येव तीर्थं वासिष्ठसंज्ञितम् ।

हेमपुष्करिणी चैव तथा वाराहसंज्ञिता ॥ ४६

कारुण्यामृतकं तीर्थं श्रीमन्मध्यार्जुने तथा ।
श्वेतारण्ये च गायत्री सावित्री च सरस्वती ।। ४७
मायूरे सह्यजा चैवानवद्या च सरस्तथा ।
अग्निपुष्करिणी नाम यत्र पेरळसंज्ञिते ।। ४८
वल्मीके देवतीर्थं च कृष्णाख्या नित्यपद्मिनी ।
प्राग्गृहे मधुतीर्थं चाक्षससन्धौ विशालकम् ।। ४९
श्री वाञ्छ्ये मुक्तिकलिते पुण्यपुष्करिणी तथा ।
यत्र विष्ण्वादयो देवाः स्वार्थान् संप्रतिपेदिरे ।। ५०
उक्तेष्वेतेषु तीर्थेषु नक्रभास्करमज्जनम् ।
ये कुर्वन्ति नरश्रेष्ठाः निष्पापास्ते दिवं ययुः ।। ५१
एतेषामपि तीर्थानां पुण्यपुष्करिणी स्वयम् ।
गर्जत्यहर्निशं पापात्पुनामीति मुदा स्फुटम् ।। ५२
तस्मात्त्वमप्यत्र विधानपूर्वं स्नानं च पुण्याब्जवतीजले वै ।
पापापहत्यै निजबन्धहान्यै कुरुष्व माघं विजयाय नित्यम् ।। ५३
एतद्रहस्यं परमं पवित्रमुक्तं मया ते परमार्थसारम् ।
गर्जन्ति देवा दिवि सन्निविष्टा ह्यहो नु मर्त्या भुवि
माघमज्जनात् ।। ५४
वयं कदा भारत भूमिभागमभ्येत्य पुण्येष्वपि तीर्थकेषु ।
स्नानं च कुर्मो महदंहनाशादक्षीणपुण्याय दिवः पदाय ।। ५५
जाबालिः–
इतीदं माघमाहात्म्यं यः पठेत्प्रयतश्शुचिः ।
स मुक्तस्सर्वपापेभ्यो देवस्त्रीभिश्च पूज्यते ।। ५६
देवालये मठे वाऽपि स्नातुं नैव क्षमो यदि ।
पठेत पाठयेद्वापि स स्नानफलमश्नुते ।। ५७ ।।

इति श्री स्कान्दे सनत्कुमारसंहितायामुपरिभागे
सप्तपञ्चाशोऽध्यायः

## ।। नवमोऽध्यायः ।।

बृहत्सेनः -

श्रुतं माघस्य माहात्म्यं कृपया परमार्थदम् ।
दुर्गामाहात्म्यमधुना महिषापत्प्रभञ्जनम् ।। १

वदेदानीं महायुद्धे जयदं पृथिवी भुजाम् ।
शत्रु नाशाय मे ब्रह्मन् कृपा मयि तवास्ति चेत् ।। २ ।।

सूतः –

इति तेन सुसंपृष्टो जाबालिर्यदुवाच ह ।
तदिदानीमहं वक्ष्ये शृण्वन्तु ऋषयोऽधुना ।। ३ ।।

जाबालिः -

शृणुष्व राजशार्दूल प्रतिराजभयंकर ।
महिषासुरमर्दिन्या वैभवं विजयप्रदम् ।। ४ ।।

लवणासुर इत्यासीत् तस्य ज्येष्ठस्तु माहिषः ।
महा महिषरूपाढ्यः साधुसज्जनतापवान् ।। ५ ।।

भूलोके देवलोके च पाताळे पर्वतोत्तमे ।
याः स्त्रियस्संति रूपाढ्याः तास्सर्वाश्च हृता बलात् ।। ६ ।।

प्रधर्ष्यमाणास्तेनैव तथा बन्दीकृतास्तदा ।
शोचन्त्यो दुःखिता भूत्वा बाष्पनेत्राः कलस्वनाः ।। ७ ।।

मातरं पितरं पुत्रान् बन्धून् भ्रातॄंस्तथैव च ।
हित्वा दीर्घशुचा युक्ताः दासीभावं प्रपेदिरे ।। ८ ।।

देवाश्च यज्ञविघ्नैश्च हव्यकव्यादिवर्जिताः ।
निश्शोभा निर्विमानाश्च निरुत्साहा निराकृताः ।। ९

महिषासुरशब्दं तु श्रुत्वा सन्त्रासिता भृशम् ।
अदृश्यमानास्तेनैव रूपान्तरपरिग्रहाः ।। १०

वनेषु गिरिकुञ्जेषु गूढदेहाः परस्परम् ।
यत्र क्वापि निरालम्बा देवा देवेन्द्रवर्जिताः ।। ११
बृहस्पतिमुपाश्रित्य मन्त्रं चक्रुरनीश्वराः ।
आत्मरक्षणकामाश्च राक्षसस्य क्षयं प्रति ।। १२
देवाः -
बृहस्पते महाबुद्धे देवानां हितकृत्तम ।
त्वामाश्रित्यैव जीवामो राक्षसैश्च प्रपीडिताः ।। १३
महिषासुरनाम्ना च पीडिता वयमद्य वै ।
तस्माद्रक्षोभयात्त्रातुं त्वमेव गतिरद्य नः ।। १४
इत्युच्यमानस्स गुरुर्देवैरिन्द्रपुरोगमैः ।
उपायं चिन्तयामास महिषासुरमर्दने ।। १५
तदुपायं च देवानामुवाच नियतात्मवान् ।
बृहस्पतिः -
देवाः शृण्वन्तु वो वच्मि महिषापत्प्रभञ्जनम् ।। १६
वयं सर्वे समूह्याशु देवीं दुःखार्तिहारिणीम् ।
दुर्गां संपूज्य विधिवत्स्तोत्रं कुर्मः प्रयत्नतः ।। १७
श्री वाञ्छ्य नगरे रम्ये प्राकाराट्टालकैर्युते ।
वीथीशतयुते पुण्ये ह्यापणैस्समलङ्कृते ।। १८
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरपि समाकुले ।
वेश्यांगनाभिस्सहिते विटशैलूषसंयुते ।। १९
वाञ्छ्येशस्योत्तरे भागे मकुटेन प्रपूजिता ।
अष्टभिश्च भुजैर्युक्ता दुर्गाऽतिप्रीतिशङ्करी ।। २०
सैवास्माकं मनोऽभीष्टं करिष्यति न संशयः ।
जाबालिः -
इति सर्वे समागत्य स्तोत्रं चक्रुः पृथक्पृथक् ।। २१

देवाः -

देवि त्वदङ्घ्रि युगळं प्रणताः स्म
      सर्वे रक्षोभयेन महिषासुरनामकेन ।
हव्यैश्च कव्यैः परिवर्जिताः स्म
      भयार्दिता वेपथुभङ्गगात्राः ॥ २२

नमस्ते देवि कल्याणि नमो भयविनाशिनि ।
नमोऽम्बिके नमो मातर्नमो वेदान्तवेदिनि ॥ २३

नमः श्यामळदेहायै कोमळायै नमो नमः ।
निटिलालकदेहायै भास्वरायै नमो नमः ॥ २४

नमस्त्रिशूलहस्तायै योगिन्यै ते नमो नमः ।
नमोऽस्तु नीलकण्ठस्य भार्यायै ते नमो नमः ॥ २५

सर्वगीर्वाणरूपायै फालाक्षिण्यै नमो नमः ॥ २६

महाकाल्यै नमस्तुभ्यं महालक्ष्म्यै नमो नमः ।
सरस्वत्यै नमस्तुभ्यं सर्वदेव्यै नमो नमः ॥ २७

महामहिषभीतानां त्वत्पादशरणैषिणाम् ।
त्वमेव गतिरस्माकं नान्यथा गतिरम्बिके ॥ २८

रक्ष रक्ष कृपां कृत्वा रक्ष रक्ष नमोऽस्तु ते ॥

जाबालिः—

इति स्तुता सा शर्वाणी दुर्गा भक्तार्ति मोचनी ॥ २९

प्रसन्नोवाच वरदा देवांस्तोत्रपरायणान् ।
युद्धे तु तमहं जित्वा महिषासुरमञ्जसा ॥ ३०

मत्पादयोरधः कृत्वा युष्माकं शङ्करोमि च ।
इति दुर्गावचः श्रुत्वा देवा मुक्तभयाः पुनः ॥ ३१

युद्धं द्रष्टुं स्थितास्तत्र अन्तर्धापितरूपिणः ।
दुर्गा शोणाचलं गत्वा गुहाविष्टं च माहिषम् ॥ ३२

शृङ्गेणाकृष्य सहसा श्रीवाञ्छ्यं पुनराययौ ।
मुक्त्वा श्री वाञ्छ्य नगर वीथ्यां द्रष्टुं च तद्बलम् ।। ३३
युद्धाय च मतिं चक्रे चाष्टभिश्च वरायुधैः ।
स तु शूलं समुद्यम्य स्त्रीरूपां भुवनेश्वरीम् ।। ३४
अभ्यधावत संक्रुद्धः शृङ्गकर्षणकोपितः ।
तदाऽऽयान्तं च सा देवी शूलं चातिभयङ्करम् ।। ३५
गदया ताडयामास शूलेन सह तद्भुजम् ।
स तदाऽभिहतः क्रुद्धो रुषा ज्वलितलोचनः ।। ३६
शूलेनाभिजघानाशु तीक्ष्ण शृंगेण संभिदन् ।
शूलं दुर्गाभुजाघातवेगेन शकलीकृतम् ।। ३७
पपात स्वर्गलोकाच्च त्रिशिरा अहिराडिव ।
शूले तु शिथिलीभूते कोपनश्चण्डविक्रमः ।। ३८
शिलामादाय बृहतीं प्राहिणोद्भैरवीं प्रति ।
शिलां पर्वत संकाशामायान्तीं तां महामृधे ।। ३९
मृष्टिना ताडयामास सा तदा तिलशः कृता ।
शिलां प्रतिहतां दृष्ट्वा दुर्मन्योस्तस्य वै पुरः ।। ४०
तोमरं भिंदिपालं च सा ससर्ज वधेच्छया ।
असावायुधयुग्मं च गृहीत्वा दक्षिणे करे ।। ४१
पुनर्दुर्गावधार्थाय ह्यक्षिपद्घननिस्वनः ।
सैकहस्तेन तद्गृह्य मुष्टिना निजघान ह ।। ४२
स चावष्टभ्य मुष्टिं च जघान पुनरेव ताम् ।
मण्डलानि च सर्वाणि चतुर्दशविधानि च ।। ४३
उभौ संहृत्य संहृत्य परस्परजयैषिणौ ।
असिना परिघाग्रेण तलेन मुसलेन च ।। ४४

शूलेन मुष्टिना चैव प्रासतोमरकुन्तकैः ।
एवं बहुविधं कृत्वा दुष्करं महदद्भुतम् ।। ४५
देवानां पश्यतां चैव वर्षाणां च सहस्रकम् ।
अनेन किं बहुविधैरिति कृत्वा मतिं तदा ।। ४६
शृङ्गाभ्यां तं समाकृष्य पादाभ्यां न्यहनत्तदा ।
स तु तेन प्रहारेण पातालमगमत्तदा ।। ४७
शिरोमध्ये च तिष्ठन्ती व्यरोचच्छुभविग्रहा ।
तस्मिन्नवसरे दैवात्पुष्पवृष्टिश्च खाच्च्युता ।। ४८
देवदुन्दुभयो नेदुः देवास्साध्विति चाब्रुवन् ।
ततोऽमरा ह्यभीताश्च यज्ञादींश्चक्रुरञ्जसा ।। ४९
विमानानि समारुह्य यथाकामं चरन्ति हि ।
पुनश्च देवा अभ्येत्य देवीं स्तुत्वा च निर्वृताम् ।। ५०
देवास्स्वांश्च पुनर्लोकान्ययुरत्यन्ततोषिताः ।
बन्दीगृहाद्विनिर्मुक्ता देवनार्यो विरेजिरे ।। ५१
प्रावृण्मेघ विनिर्मुक्ताः शारद्यश्चांद्रमाः कलाः ।।
सूतः–
दुर्गामाहिषमाख्यानमद्भुतं विजयप्रदम् ।। ५२
उक्तं वोऽथ यथा प्रोक्तं राज्ञे जाबालिना पुरा ।
संग्रामे विजयप्राप्तिः शत्रूणां च विनाशनम् ।
सङ्कटे विषमे प्राप्ते वने दुर्गे नदीतटे ।। ५४
शत्रुमध्ये विवादे च राजद्वारे विशेषतः ।
प्रतिवादिविवादे च व्याध्युपद्रव एव च ।। ५५
जप्यमानमिदं स्तोत्रं विजयाय भवेद् ध्रुवम् ।
महानवम्यां यः प्रातः शतं कृत्वा तु तर्पणम् ।। ५६

करोति कारयेद्वापि देवीस्तोत्रेण वै नृप ।
षण्मासं प्रजपेद्यस्तु त्रिस्नायी विजितेन्द्रियः ॥ ५७
भिक्षाशनपरो भूत्वा निराहारोऽथवा जपेत् ।
विद्याकामो लभेद्विद्यां काम्यार्थी काममाप्नुयात् ॥ ५८
राज्यकामो लभेद्राज्यं स्त्री कामः स्त्रियमाप्नुयात् ।
रोगान्मुच्येत रोगार्तो बद्धो मुच्येत बन्धनात् ॥ ५९
पुत्रकामो लभेत्पुत्रं सर्वार्थी सर्वमाप्नुयात् ॥
महिषाख्या सुरमर्दनं प्रभो कथितं कारणतो जयादितुष्टिदम् ।
त्वमिदं गोपाय नास्तिकेभ्यो जपवर्यं जपतां वरिष्ठमेतत् ॥ ६०

इति श्री स्कान्दे सनत्कुमारसंहितायामुपरिभागे अष्टपञ्चाशोऽध्यायः

## ॥ दशमोऽध्यायः ॥

बृहत्सेनः-

अस्य क्षेत्रस्य माहात्म्यं कथितं भवताऽऽदरात् ।
श्रुतं मया विस्तरेण सन्तुष्टं च मनश्च मे ॥ १
पुण्य पुष्करिणी तीरे वस्तुं कालं च तत्फलम् ।
तिथिवारादियोगांश्च ब्रूहि मे कृपया मुने ॥ २

जाबालिः–

साधु पृष्टं त्वया राजन् लोकोपकरणाय वै ।
वच्मीदानीं त्वया पृष्टस्त्वत्प्रश्नस्यानुपूर्वकम् ॥ ३
सौरं चान्द्रं सावनं च मासानां त्रिविधः क्रमः ।
तन्मध्ये चान्द्रमाश्रित्य वक्ष्ये योग विनिर्णयम् ॥ ४
चैत्रे मासेऽसिताष्टम्यां सोमवारो भवेद्यदि ।
तदाऽऽर्द्रासहितं यच्च तद्गौरीशङ्करं विदुः ॥ ५

तस्मिन्प्रातस्समुत्थाय दन्तधावनपूर्वकम् ।। ६
बहिश्शौचादिकान् कृत्वा ह्यन्तर्जानु जले स्थितः ।
तर्पणानां त्रयं कृत्वा त्रिः स्नायान्मौनमाश्रितः ।। ७

मन्त्रः –

गौरीशङ्करयोगोऽस्मिन् करिष्ये स्नानमादरात् ।
पापक्षयाय देवेश पुण्याब्जिन्या जलेऽमले ।। ८

तत उत्थाय च जलाद्वाससी परिधाय च ।
तीर्थस्योत्तरदिग्भागे वसेत्परदिनावधि ।। ९

नवम्यां प्रातरुत्थाय पूर्ववत् स्नानमाचरेत् ।। १०
वाञ्छ्येशं च नमस्कृत्य तीरे पारणमाचरेत् ।
गौरीशङ्करयोगोऽयं ब्रह्महत्या निवारणः ।। ११

तन्मासे कृष्णपक्षे तु भौमाश्विनी भवेद्यदि ।
यमयोग इति ख्यातो ज्योतिर्विद्भिः प्रकीर्तितः ।। १२

तस्य स्नानविधिं वक्ष्ये रहस्यं पापनाशनम् ।
रक्षोघ्नं भूतशमनं दारिद्र्यविनिवारणम् ।। १३

दूर्वाक्षतैः कृष्णतिलैर्गत्वा पुण्याब्जिनीतटम् ।
पूर्वोक्तविधिना युक्तं पूर्वमन्त्रमुदाहरन् ।। १४

दानं कृत्वाऽथ तत्तीरे यमाभिमुखसंस्थितः ।
यमसूक्तं जपित्वाऽथ माषौदन बलिं हरेत् ।। १५

एवं कृते दण्डपाणिस्सन्तुष्टो वरदो भवेत् ।
न तस्य यमपीडा च भविष्यति कदाचन ।। १६

पितरस्तृप्तिमायान्ति वरदाश्च भवन्ति ते ।
पितृप्रसादजननात्संपद्वृद्धिर्भविष्यति ।। १७

नरकस्था दिवं यान्ति दिविष्ठाः ब्रह्मणः पदम् ।
ब्रह्मिष्ठाश्च शिवानन्दं तत्र मुक्ता भवन्ति च ।। १८

अथ ते वच्मि वैशाखमासि योगागमं च यत्।
तस्य तस्य विधानं च नियमं च यथोदितम्॥ १९
शुक्लपक्षे तृतीयायां रेवती भृगुसंयुता।
बार्हस्पत्यमिदं योगं प्रचक्षन्ते मनीषिणः॥ २०
अस्मिन्पुण्यतमे योगे श्री वाञ्छ्ये भक्ति मुक्तिदे।
पङ्कजानां सहस्रेण मालां कृत्वा शिवार्चनम्॥ २१
यः करोति त्रिषवणं यतवाक्कायमानसः।
स याति शिवसालोक्यं शिवेन सह मोदते॥ २२
अस्मिन्दुर्गां च महिषमर्दिनीं वा विभूतये।
अष्टोत्तरशतेनैव पङ्कजैरर्चयेद्बुधः॥ २३
अचिरेणैव कालेन वाक्सिद्धिर्जायते शुचिः।
सकृच्छ्रवणमात्रेण धारणा च भविष्यति॥ २४
ज्येष्ठे सिताष्टमी या वै धर्मराजर्क्षसंयुता।
ज्येष्ठाष्टमीति विज्ञेया पितॄणां मुक्तिहेतवे॥ २५
उच्चार्य नामगोत्राणि द्वितीयान्तैः स्वकान् पितॄन्॥ २६
त्रिभिस्त्रिभिरंजलिभिस्तर्पणं यः प्रकल्पयेत्।
तस्य वंशभवास्तृप्ता भवन्त्या चन्द्रतारकम्॥ २७
आषाढ पूर्णिमायोगे चन्द्र नक्षत्र संयुते।
जलदान व्रतं कुर्याच्चन्द्रस्य प्रीतिहेतवे॥ २८
बृहत्सेनः-
जलदानव्रतं नाम केन चीर्णं पुरा प्रभो।
तस्य पुण्यफलं किं वा कर्तव्यं तस्य किं वद॥ २९
जाबालिः—
सुतपा नाम विप्रर्षिर्यज्वनां प्रवरस्सदा।
गौतमीतीरवासी च तपस्स्वाध्याय तत्परः॥ ३०

चीरकृष्णाजिनधरो जटावल्कलसंयुतः ।
मौनी शुचिस्सदा दान्तो ब्रह्मयज्ञपरायणः ॥ ३१

सुयज्ञ इति तस्यासीच्छिष्यस्सर्वगुणोत्तरः ।
तेन तस्य व्रतमिदं प्रोक्तं पितृविमुक्तये ॥ ३२

सुतपाः–
सुयज्ञ शृणु वक्ष्यामि त्वत्पितॄणां विमुक्तिदम् ।
जलदानव्रतं पुण्यं भुक्तिमुक्ति प्रदायकम् ॥ ३३

आषाढे पूर्णिमायोगे चन्द्रर्क्षेण समन्विते ।
तस्मिंश्चन्द्रमसं पूज्य ब्राह्मणान् प्रयतान्शुचीन् ॥ ३४

अभ्यर्च्य षड्रसान्नेन तर्पयेद्यदि तान् द्विजः ।
चन्द्रस्तु तृप्तिमायाति ब्राह्मणानां प्रपूजनात् ॥ ३५

तस्मात्ते सोमराजानो ब्राह्मणा इति च श्रुतिः ।
तेन स्वपितरः सर्वे ज्ञाता ज्ञातचरा अपि ॥ ३६

तृप्ता भवन्ति सद्यो वै तत्कुरुष्व त्वमप्युत ।
श्री वाञ्छ्ये मुक्ति चतुरे पुण्यपुष्करिणी तटे ॥ ३७

स्ववंशजान्समुद्दिश्य जलपात्रपुरस्सरम् ॥
सूतः -
इत्युक्तो गुरुणा शिष्यो व्रतमेकं चकार सः ॥ ३८

ते च प्रीतास्तु पितरस्स्वर्गं च प्रतिलेभिरे ।
एतेषु पुण्ययोगेषु व्रतकृन्मनुजेश्वरः ॥ ३९

स याति प्रवरःश्रीमान् वासवस्य सलोकताम् ।
य एतच्छ्रावयेन् नित्यं शृणुयाद्भक्तिसंयुतः ॥ ४०

देशान्तरगतो वाऽपि मुच्यते पातकैर्द्विजः ।
बृहत्सेनः–
एतत् क्षेत्रस्य विस्तारं परितः क्षेत्र संज्ञितम् ॥ ४१

इदानीं ब्रूहि मे ब्रह्मन् महिमानं च तत्वतः ।
जाबालिः–
शृणु राजन् महाभाग कीर्तनात्पुण्यवर्धनम् ।। ४२
श्री वाञ्छ्येशविमानस्य परितो योजनद्वयम् ।
श्री वाञ्छ्यक्षेत्र विस्तारः कृते चैवं प्रकीर्तितः ।। ४३
तस्मिन्निवसतां पुंसां मुक्तिरेव न संशयः ।
एतत्कृतयुगे प्रोक्तं त्रेतायान्तु तदर्धकम् ।। ४४
द्वापरे तु तदर्धं स्यात्पंचक्रोशं कलौ युगे ।
ज्ञानिनोऽज्ञानिनो वाऽपि चण्डालाद्या नरा भुवि ।। ४५
मरणं लब्धवन्तो ये पूर्वकर्मानुरूपतः ।
विरूपनयना भूत्वा वसन्ति रजताचले ।। ४६
क्षणमात्रं तु यः कुर्यात् स्थलवासं शिवालये ।
गाणापत्यं च लभते नागेन्द्रकृतभूषणः ।। ४७
तीर्थोत्सवं च यः कुर्याद्वसन्तोत्सवमेव वा ।
विमानवरमारुह्य वसते शिवसन्निधौ ।। ४८
दध्ना च पयसा चैव मधुना सर्पिषाऽथवा ।
कदली नालिकेरैश्च महापूजां करोति यः ।। ४९
दिव्यैराभरणैश्चैव दिव्यस्तोत्रैस्तथैव च ।
पूजयेद्यस्तु वाञ्छ्येशं शिवेन सह मोदते ।। ५०
प्राकारमण्टपं चैव गोपुरं च करोति यः ।
इह लोके तु साम्राज्यं भुक्त्वा भोगान् यथेच्छया ।। ५१
तदन्ते शिवसायुज्यं लभते नात्र संशयः ।
रथोत्सवं च यः कुर्यात् छत्रचामरवीजनैः ।। ५२
चन्दनागरुगन्धैश्च कुङ्कुमैरक्षतादिभिः ।
पुष्पैरुच्चावचैश्चैव घनसारसमन्वितैः ।। ५३

दीपदण्डैश्च बहुभिर्ध्वजदण्डैस्तथैव च ।
गीतवादित्र निर्घोषैर्भेरीपणव गोमुखैः ।। ५४
मृदङ्गमुरजाद्यैश्च ढक्का काहळ वेणुभिः ।
एवं रथोत्सवं यस्तु कुरुते कारयेत वा ।। ५५
दिव्यस्त्रीसहितो भूत्वा दिव्य भोगसमन्वितः ।
अप्सरोभिस्सगन्धर्वैस्स्तूयमानो दिवानिशम् ।। ५६
कल्प कोटिशतं साङ्गं देवस्य पुरतो वसेत् ।
मुनितीर्थाद्धारमात्रं मृदमुद्धरते पुमान् ।। ५७
वंशाद्वयं समुद्धृत्य गाणापत्यपदं लभेत् ।
तत्र वर्षसहस्रन्तु दिव्यानामधिवास्य च ।। ५८ ।।
तत्रैव मोक्षं लभते शिवसायुज्यमाप्नुते ।
सत्यव्रते तु यत्पुण्यं यत्पुण्यं त्वभयप्रदे ।।। ५९
तदत्र क्षणमात्रेण लभते नात्र संशयः ।
तीर्थमध्ये तु पतितं शैवालं कल्मषन्तथा ।। ६०
वर्षे वर्षे तु निश्शेषं कुर्याद्वा कारयेत वा ।
सकोटिकुलसंयुक्तः शिवलोकं लभेद् ध्रुवम् ।। ६१
एकवर्षं तु यः कुर्यात्स तस्यार्धफलं भवेत् ।
सोपानमार्गं यः कुर्यात्तीर्थस्यापि शिवाग्रतः ।। ६२
वृषमारुह्य स वसेच्छिवलोके न संशयः ।
वस्त्रं वा पुष्पमेकं वा वाञ्छ्य लिङ्गे समर्पयेत् ।। ६३
अमन्त्रं वा समन्त्रं वा कुलकोटिं समुद्धरेत् ।
प्रायश्चित्तविहीनानां पापानामतिपापिनाम् ।। ६४
वाञ्छ्येश दर्शनादेव मुनितीर्थनिषेवणात् ।
मुक्तिर्भवति नान्यत्र युगानां कोटिकोटिभिः ।। ६५

कर्मभ्रष्टाश्च ये केचिज्जातिभ्रष्टास्तथैव च ।
श्री वाञ्छ्यवासमात्रेण ब्रह्महत्याविनाशनम् ॥ ६६
श्री वाञ्छ्यवासिनो मर्त्यान् दृष्ट्वा देशान्तरे जनाः ।
नमस्कारं प्रकुर्वन्ति शिवतुल्या हि ते नराः ॥ ६७
तेषान्दर्शनमात्रेण ब्रह्महत्याऽपि नश्यति ।
देवस्य धवळाकारं दूरदर्शनगोपुरम् ॥ ६८
चूर्णेन गुडसारेण कुरुते कारयेत वा ।
तस्यैव नामस्मरणात्पापमोक्षो भविष्यति ॥ ६९
देवद्रव्यापहरणात् देवद्रोहरता नराः ।
क्रमेण वर्षमात्रेण ते नश्यन्ति न संशयः ॥ ७०
रौरवादिषु घोरेषु पतिताः पापमोहिताः ।
युगानां विंशतिं स्थित्वा राक्षसत्वं व्रजन्ति ते ॥ ७१
श्री वाञ्छ्य वासमाहात्म्यात् कथंचिज्जन्मकोटिभिः ।
दैवात्पुण्याब्जिनीस्नानात्पापान् मुक्ता भवन्ति हि ॥ ७२
बहुनात्र किमुक्तेन राजन् श्री वाञ्छ्यसंज्ञके ।
वस्तव्यं पापमोक्षाय मुक्त्यर्थं मुनिपुंगवाः ॥ ७३
ज्ञानाज्ञानकृतं पापं कामचारेण यत्कृतम् ।
तत्सर्वं श्रवणादेव माहात्म्यस्य विनश्यति ॥ ७४
यस्मिन्गृहे विलिखितं तदिदं पुराणं सन्तिष्ठते क्षणमपि प्रतिवासरं च ।
तस्यैव लक्ष्मी र्वितनोति नित्यमैश्वर्यमारोग्यमतिप्रवृद्धम् ॥ ७५
यस्तु चिन्तयते नित्यं श्री वाञ्छ्यगमनं द्विजः ।
निमिषं निमिषार्धं वा सोऽश्वमेधफलं लभेत् ॥ ७६
क्षणार्धमपि यः कुर्याद्वासं श्री वाञ्छ्य सन्निधौ ।
स लभेदूर्वशीसङ्गं शतक्रतुसमीपतः ॥ ७७

श्री वाञ्छ्ये वसतिं पुण्यां यः कुर्यादात्मपोषणः ।
विमानवरमारुह्य विचरेत् ब्रह्मणः पदे ।। ७८

परमिममितिहासं वेदविद्भिर्विचिन्त्यं
सकलकलुषनिघ्नं साधुभिर्गीयमानम् ।
निरतिशयसुखाप्त्यै यः शृणोतीह भक्त्या
त्रिविधपुरुषभोगान् प्राप्य मुक्तिं लभेत ।। ७९

इति श्री स्कान्दे सनत्कुमारसंहिताया मुपरिभागे
अष्टपञ्चाशोऽध्यायः ।

## ।। एकादशोऽध्यायः ।।

(ब्रह्माण्डपुराणतः)

(विष्णुनारदसंवादः)

श्री भगवानुवाच—

शृणु वत्स महाप्राज्ञ मनूनामुत्तमं मनुम् ।
यं जप्त्वा सकलान् कामान् विद्यां श्रियमनूपमाम् ।। १

प्राप्तवन्तो महात्मानो वाचस्पति सुरादयः ।
वाणी लक्ष्मीरुमा चैव भर्तॄन् ब्रह्मादिकान् वरान् ।। २

कावेर्या दक्षिणे तीरे योजनद्वितये स्थलं ।
श्रीवाञ्छ्याख्यं महत् स्थानं विष्णुना निर्मितं पुरा ।। ३

तत्र जप्त्वा महालक्ष्मीः प्राप्ता स्वाभिमतान्वरान् ।
श्रीवाञ्छितत्वाच्छ्रीवाञ्छ्यमिति वेदविदो विदुः ।। ४

मुनितीर्थमिति ख्यातं मुनिभिर्निर्मितं पुरा ।
गङ्गाजल समं तोयं विद्यते तत्र पुत्रक ।। ५

तत्र तु स्नानमात्रेण मुच्यते सर्वकिल्बिषैः ।
अद्यापि दृश्यते वत्स ब्रह्म क्षत्रगृहादिभिः ।। ६

विश्वनाथः स्वयं साक्षात् षट्सु स्थानेषु तिष्ठति ।
क्षेत्राण्येतानि काश्याश्च तुल्यान्येव न संशयः ॥ ७

श्री वाञ्छ्यं निगमारण्यं गौरीमायूरमर्जुनम् ।
छायावनं पञ्चनदं काशीक्षेत्रं समं विदुः ॥ ८

एतेषामुत्तमं वाञ्छ्यं तपस्सिद्ध्यै न संशयः ।
एकं च कोटिगुणितमिति वेदेषु निश्चितम् ॥ ९

मन्त्रद्वयं प्रवक्ष्यामि सावधानमनाः शृणु ।
अस्य मन्त्रस्य सदृशं नास्त्येवान्यत्कलौ युगे ॥ १०

क्रींकारं बीजमित्युक्तं स्वाहा शक्तिरतः परं ।
इष्टार्थविनियोगस्तु मंत्रस्यैतदुदाहृताः ॥ ११

ओं नमो भगवते च शिवाय च ततः परम् ।
वाञ्छ्यनाथाय च ततो मेधां प्रज्ञां तथैव च ॥ १२

प्रियं मेऽद्य प्रयच्छेति वह्निजायां ततो वदेत् ।
परमात्मा ऋषिः प्रोक्तो गायत्री छन्द उच्यते ॥ १३

देवता वाञ्छ्यनाथोऽयं ऋषिश्छन्दोऽस्य देवता ॥ १४

ध्यानं—

इन शशिशिखिनेत्रं पार्वतीशं गिरीशं
कमलजहरिसेव्यं श्रीकरं वाञ्छ्यनाथम् ।
अखिलनिगमवेद्यं योगिहृद्ध्यानगम्यं
विधृतभुजगहारं चन्द्रचूडं भजेऽहम्॥१५

जपं लक्षगुणं कृत्वा ततो होमादिकं तथा ॥ १६

अथ कामानिमान्वक्ष्ये शृणुष्व तव नारद ॥ १७

काम्यानां सिद्धिदो मन्त्रो निर्वाणं लभते नरः ।
कोटिजापेन मन्त्रस्य शिवतत्वं लभेद्ध्रुवम् ॥ १८

दशलक्षमिमं मन्त्रं स्वर्गकामो जपेन्नरः ।
अष्टलक्षजपेनैव शिवस्यातिप्रियो भवेत् ।। १९

युगलक्षजपेनैव विद्यार्थी लभते गिरम् ।
वेदशास्त्राण्यश्रुतानि व्याचक्षेत न संशयः ।। २०

त्रिलक्षं वा द्विलक्षं वा लक्षं वाऽथ जपेन्नरः ।
एकलक्षजपेनैव कवीनामग्रणीर्भवेत् ।। २१

पञ्चाशच्च सहस्रेण कवित्वं लभते नरः ।
अयुतद्वयजापेन श्रुतमात्रेऽवधार्यते ।। २२

अयुतेन जपेनैव वाक् सिद्धिश्च भविष्यति ।
लक्षत्रयं जपेद्यस्तु श्री कामी मन्त्रकोविदः ।। २३

तद्गृहे किङ्करी भूत्वा राजलक्ष्मीर्वसेच्चिरम् ।
लक्षद्वयजपेनैव राज्यलक्ष्मीं लभेन्नरः ।। २४

लक्षमेकं जपित्वा तु धनधान्ययुतो भवेत् ।
अयुतं द्व्ययुतं कुर्याद्भूप्राप्तिश्च भविष्यति ।। २५

अयुतेन जपेनैव लक्ष्मीः वश्यैति मंत्रिणम् ।
सन्तानार्थी जपेन्मन्त्रं लक्षमेकं जितेन्द्रियः ।। २६

सर्व लक्षणसंपन्नं सर्वशास्त्रार्थकोविदम् ।
अणिमादिश्रिया युक्तमप्रमेयप्रभायुतम् ।। २७

सर्वज्ञं ज्ञानसंयुक्तं प्राप्नुयात्पुत्रमुत्तमम् ।
तन्नाम चैव धर्तव्यं तत्तुल्यो भवति ध्रुवम् ।। २८

अयुतद्वितयं जप्यात्कन्यार्थी मन्त्रमुत्तमम् ।
गन्धर्वीप्रतिमां कन्यां प्राप्नुयाच्छ्रीमतीं नरः ।। २९

पुष्टिकामो जपेन्मन्त्रमयुतं द्व्ययुतं नरः ।
तद्देशे भूयसीं वृष्टिं वासवो वर्षति ध्रुवम् ।। ३०

लक्षमेकं जपेन्मन्त्रं राजवश्यो भवेद्ध्रुवम् ।
षट्कर्मवित् त्विदं मन्त्रमयुतद्वितयं जपेत् ॥ ३१
यं यं कामयते मन्त्री तं तमाप्नोत्यसंशयम् ।
ब्रह्मवृक्षसमिद्भिश्च जुहुयाद्विजितेन्द्रियः ॥३२
आदित्यमण्डलं भित्वा लभेत्कैवल्यमुत्तमम् ।
अपामार्गसमिद्भिर्वा गव्येनाज्येन वा पुनः ॥ ३३
विद्यार्थी जुहुयान्नित्यं तेजस्कामी तु तेजसा ।
श्रीकण्ठैः पद्मबिल्वैर्वा श्रीकामो जुहुयाच्छुचिः ॥ ३४
सघृतं पायसान्नेन इक्षुभिर्वा विशेषतः ।
पुत्रजीवंतिकाकाष्ठैः जुहुयाद्गव्य सर्पिषा ॥ ३५
अश्वत्थस्य समिद्भिर्वा सन्तानार्थी जितेन्द्रियः ।
कन्यार्थी लाजहोमेन क्षीरार्थी क्षीरहोमतः ॥ ३६
अर्कवृक्षसमिद्भिश्च क्षुद्रार्थग्रहशान्तये ।
मधुना जुहुयान्मन्त्री राजा वश्यो भविष्यति ॥ ३७
मल्लिकाकमलार्कैश्च अश्वत्थार्जुनकैर्हुनेत् ।
करवीरैर्घृतयुतः कर्मणां हविरीरितम् ॥ ३८
प्रयोगाणां तु सर्वेषां घृतं हविरितीरितम् ।
अथवा पायसेनैव होमं कुर्याद्विचक्षणः ॥ ३९
ततो यन्त्रस्य माहात्म्यं वक्ष्यामि शृणु पुत्रकाः ।
पद्मं दशदळं लिख्य मन्त्रवर्णान्दलेषु च ॥ ४०
पाश्वंजेन युतान् लिख्य ततो वर्तुळमालिखेत् ।
दश शूलांस्ततो लिख्य महासारस्वतप्रदम् ॥ ४१
एतद्यंत्रं महावीर्यं सरस्वत्या विनिर्मितम् ।
लिखित्वा वर्तुलं पूर्वं दशाष्ट कमलं ततः ॥ ४२

दळेषु मन्त्रवर्णांश्च श्रीबीजेन समन्वितान् ।
श्रीबीजं वर्तुले लिख्य वर्तुलं कमलां ततः ॥ ४३
मातृकाश्च ततश्चैव चतुष्कोणं ततो लिखेत् ।
यन्त्रस्य स्मरणाल्लक्ष्मीः प्रसन्ना भवति ध्रुवम् ॥ ४४
न प्रकाश्यं च कस्यापि विष्णुना निर्मितं मया ।
चतुष्टयदळं लिख्य कोणषट्कं ततो लिखेत् ॥ ४५
मारबीजयुतान् मन्त्रवर्णान् कोणेषु संलिखेत् ॥ ४६
दळेषु विलिखेत् पश्चात् पुनश्चैवेन्दुमण्डलम् ।
सन्तानदमिदं यन्त्रं स्वयं निर्मितवान् हरिः ॥ ४७
गुह्याद्गुह्यतमं यन्त्रं प्रत्यक्षफलदायकम् ।
षट्कोणं विलिखेत् पूर्वं ततश्चैवेन्दुमण्डलम् ॥ ४८
कोणेषु मन्त्रवर्णांश्च इइबीजयुतान् लिखेत् ।
साध्यवर्णान् लिखेन्मध्ये बीजयुक्तांश्च पल्लवान् ॥ ४९
पल्लवान् मन्त्रकान्बिन्दोर्मण्डलाद्वर्तुळं लिखेत् ।
चतुर्दिक्षु लिखेच्छूलान् यन्त्रमेतद्ग्रहान्हरेत् ॥ ५०
यक्षराक्षसवेताळपिशाचान् ब्रह्मराक्षसान् ।
क्षुद्रादिग्रहरोगांश्च नाशयेद्यन्त्रमुत्तमम् ॥ ५१
प्रत्यक्षफलदं गुह्यं शंभुना कथितं पुरा ।
वर्तुलं विलिखेत् पूर्वं दशषट्कं ततः परम् ॥ ५२
दुर्गाबीजयुतान्वर्णान्दळेषु विलिखेन्मनोः ।
तद्बहिर्मातृकावर्णान् बीजयुक्तान् सबिन्दुकान् ॥ ५३
भूगोळं विलिखेत् पश्चात् शूलान्दिक्षु लिखेत् पुनः ।
साध्यवर्णं लिखेन्मध्ये बीजयुक्तं सबिन्दुकम् ॥ ५४
सर्वेषामेव शून्यानां साधारणमिदं स्मृतम् ।
तत्तद्बीजैर्लिखेदेव तत्तद्वश्यप्रसिद्धये ॥ ५५

इदं यन्त्रं विधायापि मन्त्रमेवं विधीयते ।
अर्धनारीशबीजेन मन्त्रादीन्पूर्ववल्लिखेत् ।। ५६
तत्तदाकर्षणस्यापि तत्तद्बीजैर्मनुं लिखेत् ।
सिद्धयन्त्रमिति ख्यातमेतदाकर्षणं परम् ।। ५७
यन्त्रेऽस्मिन्विलिखेन्मन्त्रं कालबीजेन पूर्ववत् ।
स्तंभनं भवति क्षिप्रं रहस्यं मन्त्रमेव तत् ।। ५८
वश्याकर्षस्तंभनानां यन्त्रं साधारणं भवेत् ।
एतद्रहस्यं परमं शंभुना कथितं पुरा ।। ५९
शिखिकोणं लिखेत्पूर्वमृतुकोणं ततः परं ।
कोणेषु मन्त्रवर्णांश्च कालरुद्रीयबीजकान् ।। ६०
ततश्च मातृकावर्णान्वर्तुळन्तु ततो लिखेत् ।। ६१
दशशूलान्वितांस्तस्मिन्यन्त्रं विद्वेषणं स्मृतम् ।
रहस्यं परमं गोप्यं शंभुना कथितं पुरा ।। ६२
इदमेवोच्चाटनस्य विलिखेद्यन्त्रमुत्तमम् ।। ६३
वायुबीजयुतं मन्त्रं साध्यं चैव सपल्लवम् ।
इदं वैरिहरं प्रोक्तं गोपनीयं महात्मभिः ।। ६४
द्वेषोच्चाटननाशानां साधारणमिदं स्मृतम् ।
इदं रहस्यं परमं शंभुना कथितं पुरा ।। ६५
अब्जमष्टदळं लिख्य मन्त्रवर्णं दळेषु च ।
तत्तत्कार्याधिदेवस्य बीजेन सहितान् लिखेत् ।। ६६
तदन्ते वर्तुळं लिख्य तदन्ते सार्धपल्लवम् ।
वर्तुळं तु पुनर्लिख्य ह्यष्टशूलांस्ततो लिखेत् ।। ६७
इदं सर्वप्रयोगस्य मन्त्रं ते कथितं मया ।
मन्त्रस्य बीजं न लिखेत्कर्मषट्कस्य बुद्धिमान् ।। ६८

शुभकर्मसु सर्वत्र लिखितव्यं न संशयः ।
वाञ्छ्यनाथस्य माहात्म्यं न वक्तुं शक्यते मया ।। ६९
इत्येवं विष्णुना प्रोक्तं नारदाय महात्मने ।। ७०

इति श्री ब्रह्माण्डपुराणे मन्त्ररहस्येऽष्टाविंशोऽध्यायः

## ।। द्वादशोऽध्यायः ।।

(ब्रह्माण्डोपपुराणतः)

ऋषयः—

श्रियं वाणीमुमां नत्वा मलयाचलशृंगके ।
अगस्त्यमब्रुवन्नेवं वसिष्ठाद्या मुनीश्वराः ।। १
भगवन् सर्वतत्त्वज्ञ त्रिकालज्ञानसागर ।
अष्टादशपुराणज्ञ महाभाग मुनीश्वर ।। २
धर्मकामार्थदं शंभोः कैवल्यदमनुत्तमम् ।
अष्टैश्वर्यप्रदं क्षेत्रं भूमौ वक्तुं त्वमर्हसि ।। ३
तेषां प्रश्नं समाकर्ण्य मुनीनां कुंभजो मुनिः ।
सन्तुष्टहृदयः शंभुं सांबं गणपतिं गुरुम् ।। ४
गिरं स्कन्दं प्रणम्याह वसिष्ठान्तान्मुनीनिति ।

अगस्त्यः—

शृण्वन्तु मुनयस्सर्वे शंभुस्थानप्रशंसनम् ।। ५
यूयं युष्माभिरनघा भाग्यवन्तः कृता भुवि ।
शंभुध्यानेन भवतां शं भवेत्पापिनामपि ।। ६
यतः शिवस्य नामास्य शंभुरित्यभिधीयते ।
शंभोराराधनेनैव जन्तूनामपि शं भवेत् ।। ७
इति श्रुतं द्विजास्तस्मात् शंभुरित्यभिधीयते ।
शंभुपूजाकृतां लोके न किञ्चिदपि दुर्लभम् ।। ८

षट्षष्टि कोटितीर्थानि षष्टिकोटिशतानि च ।
शिवक्षेत्राणि सन्त्यस्मिन् भूलोके मुनिपुङ्गव ॥ ९
तीर्थेषु तेषु सर्वेषु स्थानेषु गिरिजापतेः ।
काशी पुण्य तमा गङ्गा काश्याधिक्यं स्थलं भुवि ॥ १०
कावेर्या दक्षिणे तीरे योजनद्वयसंमिते ।
श्री वाञ्छ्यमिति विख्यातं भुक्तिमुक्तिफलप्रदम् ॥ ११
वर्तते कलिपापघ्नं सदाशिवमनःप्रियम् ।
श्रीवाञ्छ्य क्षेत्रभूभागे गणेश ब्रह्मकोटयः ॥ १२
चतुस्सागरपर्यन्तां भूमिं प्राप्य सुतादिभिः ।
अनुकू लकळत्राद्यैः धनधान्यादिभिस्सह ॥ १३
चतुरङ्गबलैर्युक्तो भुक्त्वा भोगाननेकशः ।
पुत्रे स्थाप्य महीभारं ततः शिवपुरं व्रजेत् ॥ १४
ब्रह्मप्रतिष्ठां कृत्वा तु श्रीवाञ्छ्ये राज्य संपदः ।
अनुभूयेन्द्र सदने ब्रह्मकल्पावधि स्थितः ॥ १५
शिवसायुज्यमाप्नोति श्रीवाञ्छ्यक्षेत्र वैभवात् ।
श्री वाञ्छ्येशमहीभागे पुण्यपुष्करिणी वरा ॥ १६
स्नानमात्रेण जन्तूनां पुण्यदा भाग्यदा सदा ।
कदाचिद्दर्शनैनैव पुण्याख्यसरसो नृणाम् ॥ १७
पापान्यपि पलायन्ते गङ्गाया यद्रवेस्तमः ।
तथा पुण्यसरस्तीरे श्री वाञ्छ्येशस्य चोत्तरे ॥ १८
हुतं जप्तं कृतं पुण्यं काश्याः कोटिगुणं भवेत् ।
श्री वाञ्छ्येशस्य माहात्म्यं वक्तुं वर्षशतैरपि ॥ १९
शेषेण ब्रह्मणा वापि नालमिन्द्रादिभिस्सुरैः ।
तथापि वक्ष्ये श्री वाञ्छ्ये समाराधयतां शिवम् ॥ २०

वाञ्छ्यभाजां भवेत् सिद्धिर्ब्रह्मादीनां यथामति ।
शृणुध्वं सावधानेन धर्मकामार्थसिद्धये ।। २१
श्री वाञ्छ्येशं कृपाधारं संपूज्य नलिनासनः ।
इष्टसिद्धिमवापात्र भवानी पार्वती प्रियं ।। २२
श्री वाञ्छ्येशं महादेवं संपूज्य पदमाविशत् ।
गौतमो जमदग्निश्च काश्यपोऽत्रिर्महायशाः ।। २३
विश्वामित्रो भरद्वाजो वसिष्ठोऽपि महातपाः ।
पराशरश्च वाल्मीकी राजा मकुटवर्द्धनः ।। २४
चोळदेशाधिपश्चैव महाधनुरिति स्मृतः ।
ब्रह्मण्योऽपि च कृष्णश्च विष्णुमूर्तिर्जगत्पतिः ।। २५
श्रीश्च विष्णुप्रियेंद्रश्च विकुक्षिर्मुनिपुंगवः ।
तस्य पत्नी चारुमती राजा धर्मध्वजः स्त्रिया ।। २६
श्री वाञ्छ्येशं समाराध्य स्वां स्वां वाञ्छामवाप ह ।
एवमन्ये च भूपालाश्शतशो मुनिपुंगवाः ।। २७
समाराध्य महेशानं श्री वाञ्छ्येऽत्र मनोरथान् ।
अलभन्कल्पपर्याये श्री वाञ्छ्येशास्थलस्य वै ।। २८
प्रळयान्नैव भीतिश्च प्रळयेऽपि न नश्यति ।
श्री वाञ्छ्यस्थानमतुलं भूकैलासस्थलं त्विदम् ।। २९
काश्याधिक्यात् प्रशस्तं च भूलोके मुनिङ्गवाः ।
श्रीवाञ्छ्येशस्य परितो योजनद्वयसंमितम् ।। ३०
काश्याधिक्यफलं प्राहुः पञ्चक्रोशन्तु मुक्तिदम् ।
यावत्सन्दर्शनं शंभोः श्रीवाञ्छ्येशस्य गोपुरम् ।। ३१
कैलाससदृशं क्षेत्रं सर्वस्थानोत्तमोत्तमम् ।
पञ्चक्रोशे स्थितं तीर्थं गंगासदृशमण्वपि ।। ३२

शिलालिङ्गं महेशस्य तरवः कल्पका जनाः ।
गणनाथाः स्त्रियश्चैव दिवि चाप्सरसां गणाः ।। ३३
मशकाद्याः शिवांशास्ते श्री वाञ्छ्यधरणीं स्थिताः ।
स्वर्ण स्तेयी सुरापो वा वृषलीपतिरेव वा ।। ३४
गुरुद्रोही हेमहारी मित्रद्रोही च पातकी ।
पुण्यपुष्करिणी स्नानाच्छ्रीवाञ्छ्येशस्य दर्शनात् ।। ३५
मुक्तो भवति पापेभ्यो दिनमात्रं वसन्नपि ।
कैलासपदमाप्नोति श्री वाञ्छ्येशान्मुनीश्वराः ।। ३६
क्षणार्धं वा क्षणं वापि श्रीवाञ्छ्यं यस्स्मरेन्नरः ।
याति शंभुपदं सोऽपि किमुतान्या विभूतयः ।। ३७
पुरा कैलासशिखरे पार्वत्याश्शंकरेण यत् ।
श्रीवाञ्छ्येशस्य माहात्म्यं यथा प्रोक्तं तथा त्वहम् ।। ३८
युष्माकं संप्रवक्ष्यामि मुनिश्रेष्ठास्समाहिताः ।
विशृणुध्वं निदानं तत्कैलासस्यापि भूश्रियः ।। ३९

इति श्री ब्रह्माण्डोपपुराणे श्रीवाञ्छ्य माहात्म्ये प्रथमोध्यायः

## ।। अथ त्रयोदशोऽध्यायः ।।

अगस्त्यः-

भाग्यभाक् प्राप्तकल्याणी गौरी श्रीवाञ्छ्य नायिका ।
इति प्रसिद्धं श्रीवाञ्छ्ये शिवायास्त्रिविधं भुवि ।। १
नाम शंसंति मुनयस्त्रिवर्गप्रदकारणम् ।
वाञ्छ्यनाथस्य कल्याणीं श्रीवाञ्छ्येशां भजन्ति ये ।। २
त्रिसन्ध्यं क्रमशो मर्त्यास्त्रिवर्गं प्राप्नुयुर्ध्रुवम् ।
समाराधयतां लिङ्गे वर्णिनां चैव योगिनाम् ।। ३

पुरा कैलासशिखरे कल्पवृक्षसमाकुले ।
कामधेनुपयःक्लिन्ने वृषराजपदाङ्किते ॥ ४
गङ्गाप्रवाहरम्याभिः स्वर्णपङ्कजकान्तिभिः ।
सरसीभिरनेकाभिः कल्हारकुमुदादिभिः ॥ ८
सोपानवद्भिश्शोभिष्ठे तप्तस्वर्णमयैश्शुभैः ।
शृंगैरनेकैस्संयुक्ते सिद्धगन्धर्वकिन्नरैः ॥ ६
अप्सरोभिः परिवृते त्रिगुणोत्पादितैरपि ।
सुशीतळैर्वायुभिश्च सुमेरुधरणीतले ॥ ७
चन्द्रशालान्तरे देव्या पार्वत्या च सदाशिवः ।
गौरीकल्याण नटनं ऊर्वश्या कृतमद्भुतम् ॥ ८
रंभाद्याभिर्मुदा देवैः स्कन्दनंदिमुखैरपि ।
आलोकयत्तदा नृत्तं सुमेरोः शिखरे तदा ॥ ९
विमानं कांचनाकारं पार्वत्या समलक्ष्यत ।
गणनाथः शिवाकारस्तस्मिंश्चन्द्रार्धशेखरः ॥ १०
भस्मोद्धूलितसर्वांगो नागेशकृतकुण्डलः ।
त्रिपुंड्रांकितसत्फालः पार्वती कांचनात्मके ॥ ११
विमाने शोभमानं तं गणनाथं शुभाकृतिम् ।
आलोक्य विस्मयं प्राप्य कृतांजलिपुटा प्रियम् ॥ १२
सदाशिवं नमस्कृत्य पप्रच्छेति परं शिवम् ।
भक्तवत्सल हे शंभो नमस्तुभ्यं दया निधे ॥ १३
मदिष्टनायक विभो त्वामहं शरणं गता ।
गङ्गासरस्यास्तीरेऽस्मिन् सुमेरुं धरणीतले ॥ १४
विमाने कांचनाकारे गणनाथस्त्वदाकृतिः ।
मयाऽलक्ष्यत कोऽयं वा कस्मात्पुण्यतमात् स्थलात् ॥ १५

आगतः शंस मयि ते करुणा यदि मत्प्रिय ।
पार्वत्या प्रार्थितश्शंभुः सुमेरुशिखरे प्रियाम् ।। १६
गङ्गापुष्करिणीतीरे पार्वतीमब्रवीदिति ।
श्री शिवः—
शृणु पार्वत्युमे मेऽद्य स्थानाधिक्यस्य वैभवम् ।। १७
सुमेरुं परितो भान्ति नववर्षाण्यनुक्रमात् ।
शृणुष्व गिरिजे वक्ष्ये सावधानेन चेतसा ।। १८
इलावृतं मेरुपार्श्वे हरिवर्षमनुत्तमम् ।
दिव्यवर्षं किंपुरुषं भद्राश्वं पापनाशनम् ।। १९
केतुमालं रमणकं पुण्यं हैमवतं ततः ।
भारतं वर्षकं देवि नववर्षाण्यनुक्रमात् ।। २०
सुमेरोर्दक्षिणे पार्श्वे जंबूद्वीपो विराजते ।
लक्षयोजनविस्तारे देवतिर्यङ्नरैस्सदा ।। २१
पूरिते द्वंद्वशस्तत्र जंबूद्वीपे सुपावने ।
एतस्मिन् भारते वर्षे सुमेरोर्दक्षिणे भुवि ।। २२
गङ्गा प्रवहति ह्येषा काश्यां मोक्षप्रदायिनी ।
सरयूर्यमुना चैव नर्मदा च सरस्वती ।। २३
कृष्णा वेणी तुङ्गभद्रा गौतमी सह्यजा इमाः ।
इमास्सख्यश्च गङ्गाया नद्यो मोक्षप्रदाः शिवे ।। २४
तथापि सह्यजायास्तं प्रभावं प्रवदाम्यहम् ।
त्रिदिनं स्वर्धुनी तीरे वसतां शुद्धिरुच्यते ।। २५
यमुनायास्तटे पञ्चदिनं निवसतां नृणाम् ।
शुद्धिर्विशिष्यते सद्यः पापस्यामरणावधि ।। २६
क्षणमात्र निवासेन कावेरीतीरवासिनाम् ।
नश्येद्धिचित्रं तीरेऽस्याः कावेर्या उभयोरपि ।। २७

तीरयोष्षट्सहस्रं यत् स्थानं कलिमलापहम् ।
मदीयं स्थानमाभाति षट्सहस्रेषु तेष्वपि ॥ २८
स्थानेषु सह्यजातीरे मदीयेषु नगात्मजे ।
काशीसमानमाभाति षट्स्थानं तेषु षट्स्वपि ॥ २९
स्थानेषु मत्पदेष्वेकं काश्याधिक्यं स्थलोत्तमम् ।
कावेर्या दक्षिणे तीरे योजनद्वयमात्रके ॥ ३०
श्री वाञ्छ्यमिति विख्यातं स्थानं कलिमलापहम् ।
काश्याधिक्ये महीभागे नलिनीवनशोभिते ॥ ३१
पुण्याब्जनलिनी भाति गङ्गापुष्करिणीति च ।
पुण्यपुष्करिणी चेति प्रसिद्धा भुवनत्रये ॥ ३२
पुण्यपुष्करिणीतीरे दक्षिणेऽप्यतिपावनम् ।
मदीयं लिङ्गमाभाति ज्योतिर्मयमनुत्तमम् ॥ ३३
श्रीवाञ्छ्येशं च मल्लिङ्गं नलिनीविष्टराः पुरा ।
जगतां सृष्टिसामर्थ्यं लब्ध्वा संपूज्य पार्वति ॥ ३४
भूरादिलोकानसृजन् जगन्ति नलिनासनाः ॥ ३५
कोटिसंख्यनलिनीतीरे श्रीवाञ्छ्यमिति विश्रुते ।
नलिनीविष्टराश्चापि कोटिसंख्या मुनीश्वराः ॥ ३६
विष्णवोऽपि सुराश्चैव श्रीवाञ्छ्ये नलिनीवने ।
श्रीवाञ्छ्येशस्य मे लिङ्गं समाराध्य श्रियोऽखिलाः ॥ ३७
अलभन्त ततस्स्थानं श्रीवाञ्छ्यमिति विश्रुतम् ।
मम श्रीवाञ्छ्यभूभागे लिङ्गे प्रत्यक्षकारणम् ॥ ३८
पुण्याब्जनलिनी हेतुर्नलिनासनपूजनात् ।
कारणागमनं वक्ष्ये काश्याधिक्यस्य पार्वति ॥ ३९
सृष्टिर्वा विविधा प्रोक्ता रौद्रसृष्टिर्मदीयका ।
वैष्णवी ब्रह्मसृष्टिर्वा द्वे उभे मद्भवे प्रिये ॥ ४०

नलिनासन सृष्टेस्तु कारणं नलिनीवनम् ।
श्री वाञ्छ्याद्गणनाथस्य मेरावागमनं पुनः ॥
संशृणुष्व महादेवि पार्वति त्वं ममाननात् ॥
इति श्री ब्रह्माण्डोपपुराणे श्री वाञ्छ्य माहात्म्ये द्वितीयोऽध्यायः ॥

## ॥ चतुर्दशोऽध्यायः ॥

श्री सदाशिवः-

पुरा राथन्तरस्यान्ते पुष्कलावर्तकादयः ।
ववर्षुर्गगनाद्भूरिकणानि जलधारया ॥ १
करसन्निभया भूमौ गजस्य निखिलं जगत् ।
समुद्रसलिलेनापि समाक्रान्तं महेश्वरि ॥ २
लोकाः सृष्टाश्च विधिना श्रियोऽनल्पास्सुमध्यमे ।
वषट्काराश्च वेदाश्च श्री वाञ्छ्येशस्य नायिकाम् ॥ ३
कल्याणीं प्राविशन्मायां त्वदंशांशां महेश्वरीम् ।
श्वेतारण्यादिकेष्वन्यस्थानेषु मम चांबुधेः ॥ ४
नास्ति भीतिर्जलादेषु भैरवस्याज्ञया पुनः ।
श्री वाञ्छ्य वासिनां नास्ति जन्तूनां यातनाऽप्यहो ॥ ५
यमस्य यातना याश्च नास्ति श्रीवाञ्छ्य वासिनाम् ।
कालेनापि मृतानां यच्छ्रीवाञ्छ्ये श्रवणे मया ॥ ६
पञ्चाक्षरं महामन्त्रं सत्यं संदिश्यतेऽम्बिके ।
कावेरीजलपानेन मिथ्यावादं च कुर्वताम् ॥ ७
जनानां किल पापस्य भारं वोढुं तदाऽक्षमा ।
भूमिरस्तुवदीशानं मां मेरावागता पुरा ॥ ८
भूमिस्तोत्रेण सन्तुष्टो जगत्पापहरं भुवः ।
प्रीत्यै दातुं श्रियं चैव जनानां मुक्तिमंबिके ॥ ९

गङ्गापुष्करिणीयुक्तं शृंगमुद्धृत्य मेरुतः ।
सहस्रमानहेमाभं पुण्याब्जनलिनीकुलम् ।। १०
कावेर्या दक्षिणे भागे योजनद्वयमात्रके ।
दक्षिणे हरिनद्याश्च घटिकात्रयमात्रके ।। ११
घटिकार्धोत्तरे भागे सारात्सारतरे मम ।
पूर्वाश्रमं महीभागं बृहदीशस्य पश्चिमे ।। १२
स्थापितं च मया यत्र श्रीवाञ्छ्ये नलिनीवनम् ।
मेरुशृंगं श्रिया जुष्टं धर्मकामार्थमोक्षदम् ।। १३
प्रसिद्धमहमत्रैव श्रीवाञ्छ्ये भूधरात्मजे ।
स्वयंभुलिङ्गरूपी सन् शक्त्यनन्तसमन्वितः ।। १४
निवसाम्यर्चकानां च सिद्धिदो लिङ्ग उत्तमे ।
अनन्त शक्तिः कल्याणि तेजो भूतं सुमेरुणः ।। १५
अस्मात्कैलास शिखरादधिरुह्य च शाङ्करे ।
कैलाससन्निभे सार्धमीश्वरेण मया सह ।। १६
कुमाराभ्यामप्सर सां गणैस्साकं जलान्तरे ।
गङ्गापुष्करिणीमुख्य कोटि तीर्थसमावृते ।। १७
रन्तुं च भजतां दातुं जगतां भाग्यमेव च ।
रक्षणाय भुवः प्रीत्यै जगल्लीलावहा पुनः ।। १८
आगता यत्र सरसः पुण्यस्य नलिनश्रियः ।
श्री वाञ्छ्येशस्य मे भाति चोत्तरेशान्य पूर्वतः ।। १९
सच्चिदानन्द रूपी सा कल्याणी प्रथिताऽभवत् ।
भाग्यभाक् प्राप्तकल्याणी प्रसिद्धा भुवनत्रये ।। २०
भाग्यभाक् प्राप्तकल्याणीं श्री वाञ्छ्येशस्य नायिकाम् ।
मम लिङ्गं च कैलासादागतं मां द्विजादयः ।। २१

कावेरीदेश पुलिने नलिनीवन भूतले ।
ये सेवन्ते धराधीशास्संभवन्ति पुनः पुनः ॥ २२
कैलास भागादायातं यतः स्थानमतो द्विजाः ।
भूकैलासस्थलं लोके प्रथितं भक्तभाग्यदम् ॥ २३

इति श्री ब्रह्माण्डोपपुराणे श्री वाञ्छ्य माहात्म्ये तृतीयोऽध्यायः

## ॥ पंचदशोऽध्यायः ॥

ईश्वरः-

काश्याधिक्यस्य माहात्म्यं श्री वाञ्छ्यस्य महाद्भुतम् ।
पुण्याब्ज नलिनीनाम्न्याः प्रवक्ष्ये वो मुनीश्वराः ॥ १
यस्य श्रवणमात्रेण गाणापत्यं भवेन्नृणाम् ।
काश्यां गङ्गाजले स्नानं माघ पुष्ये विशिष्यते ॥ २
अमामारभ्य माघस्य प्रयागे गाङ्ग संप्लवे ।
गङ्गायां वाप्यमावास्यापर्यन्तं प्रथमावधि ॥ ३
गयाश्राद्धं पितॄणां च तृप्त्यर्थं तद्विशिष्यते ।
वेण्यां यद्वत्समायान्ति मणिकर्णि जलेऽपि वा ॥ ४
पुष्करादीनि तीर्थानि यथा नद्यश्च पावनाः ।
षट्षष्टिकोटि तीर्थानि तथा पुण्याब्जिनीजले ॥ ५
माघत्रये समायान्ति स्वात्माघविनिवृत्तये ।
पुण्याख्य नलिनीतीरे श्री वाञ्छ्ये नक्रभास्करे ॥ ६
दिनमात्रं स्नानकर्तुः फलमेतदुदाहृतम् ।
काश्यामुत्तरवाहिन्यां गङ्गायामघमर्षणैः ॥ ७
जातं यत्पञ्चकोट्यब्दं फलं तस्माद्विशिष्यते ।
श्री वाञ्छ्ये पापिनां माघे किञ्चिदभ्युदिते रवौ ॥ ८

पुण्यपुष्करिणी स्नानं प्रायश्चित्तं विशिष्यते ।
कृष्णाष्टम्यां माघमासे पुण्य पुष्करिणी जले ॥ ९

श्री वाञ्छ्ये तण्डुलैर्वापि तिलैर्वा तर्पणान्यहो ।
द्विजैर्दत्तानि तीरेऽस्याः पुष्करिण्यास्तिलाक्षतान् ॥ १०
भक्षयन्तं समालोक्य सर्पराट् पर्वतात्मजे ॥ ११

पुष्करिण्याः पूर्वभागे श्री गन्धद्रुमकोटरात् ।
निर्गत्याप्लुत्य भेकेऽस्मिन् लक्ष्यं कृत्वाऽग्रहीत्तदा ॥ १२

अहिना संगृहीतोऽसौ मण्डूकस्तत्क्षणे मृतः ।
पुण्यपुष्करिणीतीरे श्री वाञ्छ्येऽत्र त्वया सह ॥ १३

म्रियमाणस्य भेकस्य श्रवणे दक्षिणे मया ।
भाग्यभाक् प्राप्त कल्याणीपंचाक्षरमनुत्तमम् ॥ १४

सन्दिश्यते यतो भेको देहं त्यक्त्वा गणेश्वरः ।
मदीयरूपमास्थाय स्वग्राहकमहिं वहन् ॥ १५

कण्ठे मालां विभूतिं च रुद्राक्षं समुपावहन् ।
विमानं कांचनाकारमारुह्य कनकाचले ॥ १६

गङ्गापुष्करिणीतीरे तत्त्वाग्रे च ममाग्रतः ।
आजगामात्र कैलासे श्रीवाञ्छ्ये मे महेश्वरि ॥ १७

श्रीवाञ्छ्यं यच्च तत् स्थानं भूकैलासस्थलं त्विदम् ।
काश्यां मृतानां जन्तूनां क्षणाद्भैरवयातना ॥ १८

गिरिजे संभवत्यस्मिन् श्रीवाञ्छ्ये सा न यातना ।
आसीनभैरवस्यास्य प्रसादेन समन्विताः ॥ १९

ते हि कैलासमायान्ति काश्याधिक्यमिदं स्थलम् ।
स्वर्णस्तेयी सुरापो वा ब्रह्महा वृषलीपतिः ॥ २०

गुरुतल्पी कृतघ्नो वा महापापयुतोऽपि वा ।
दुष्प्रतिग्रहयुक्तो वा महादानधनापहः ॥ २१

मल्लिङ्गदर्शनेनैव श्रीवाञ्छ्ये योजनद्वये ।
वासेनान्नस्य दानेन प्रायश्चित्तेन वा पुनः ॥ २२
पुण्यपुष्करिणीस्नानाच्छुद्धिं प्राप्नोति पार्वति ।
श्रीवाञ्छ्यं परितो मर्त्यः क्षत्रियो वैश्य एव वा ॥ २३
शूद्रो मत्पूजनं कुर्वन् पापी शुद्धिमवाप्नुयात् ।
पुत्रकामो लभेत्पुत्रं श्री वाञ्छ्ये बीजदानतः ॥ २४
धनकामो दरिद्राय दद्यादन्नरसं धनम् ।
श्री वाञ्छ्ये मत्प्रियार्थं वा मेरुमानधनाप्तये ॥ २५
गङ्गाख्यपुष्करिण्यां तु श्रीवाञ्छ्ये स्नानमात्रतः ।
सिद्ध्यन्ति तस्य पुण्यानि ध्रुवं कात्यायनीश्वरि ॥ २६
पुण्यपुष्करिणी लोके श्रीवाञ्छ्ये विश्रुता यतः ।
चैत्रशुक्लाष्टमीयुक्त सोमार्द्रासंयुते दिने ॥ २७
ब्रह्महत्यापनोदार्थं स्नानं कुर्वीत पार्वति ॥ २८
पुण्यपुष्करिणीस्नानं मुक्तिदं लिङ्गदर्शनम् ।
श्रीवाञ्छ्येशस्य मे स्थाने वासो मुक्तिप्रदः क्षणात् ॥ २९
कैलासशिखरे श्रुत्वा सदाशिवमुखादपि ।
गाणापत्यं च भेकस्य पुष्करिण्यास्तटेऽभवत् ॥ ३०
स्नानात्प्राप्तस्य भेकस्य पुष्करिण्यां महेश्वरि ।
पुलकांकित सर्वाङ्गी वरं पप्रच्छ शङ्करम् ॥ ३१
सदाशिव नमस्तेऽस्तु भक्तवत्सल ते नमः ।
त्वामहं शरणं प्राप्ता वरं देहि महेश्वर ॥ ३२
अस्मिन् काश्याधिके स्थाने स्नातुमिच्छाम्यहं प्रभो ।
पुण्यपुष्करिणीतीर्थे तव लिङ्गमनुत्तमम् ॥ ३३
कुमाराभ्यां च कैलासात् त्वया सह गणैरपि ।
द्रष्टुं वाञ्छाऽस्ति मे शंभो तथा त्वं कर्तुमर्हसि ॥ ३४

वस्तुं वाञ्छां प्रार्थितोऽसौ पार्वत्येति सदाशिवः ।
पार्वतीमङ्कमारोप्य वृषारूढो गणैस्सह ॥ ३५

गन्तुं श्रीवाञ्छ्यभूभागं कैलासशिखराच्छिवः ।
उच्चचालांबरं सूर्यो यथोदयगिरेरपि ॥ ३६

दक्षिणाभिमुखः प्राह पार्वतीं परमेश्वरः ।
काशीनिभानि स्थानानि कैलाससदृशानि वै ॥ ३७

बहूनि संति स्थानानि तेषामप्युत्तमानि च ।
स्थानानि मत्प्रियाण्यद्य वक्ष्ये पार्वति तच्छृणु ॥ ३८

इति श्री ब्रह्माण्डोपपुराणे श्रीवाञ्छ्यमाहात्म्ये चतुर्थोध्यायः ॥

## ॥ षोडशोऽध्यायः ॥

श्री सदाशिवः-

अत्र माहिष्मती तीरे महाकालं मम प्रियम् ।
काशीकैलास सदृशं पश्य पार्वति शोभने ॥ १

कालिन्दीनलिनीतीरे मधुरा मुक्तिदायिनी ।
काशीनिभा विभात्यस्यां मधुरायां वसाम्यहम् ॥ २

अत्र गोदावरीतीरे पश्य पार्वति शोभनम् ।
द्राक्षारामं मम स्थानं काशीकैलाससन्निभम् ॥ ३

अत्र श्रीशैलशिखरं दृष्टमात्रेण मोक्षदम् ।
पश्य नन्दी फलान्यत्ति प्रत्यक्षं वापि दृश्यते ॥ ४

भ्रमरांबायुतस्साकं कोटिसंख्यैर्गणेश्वरैः ।
निवसामि ततः पश्य सुवर्णमुखरीतटे ॥ ५

कालहस्तीश्वरं लिङ्गं कलिकल्मषनाशनम् ।
मदीयं भाति साकं च ज्ञानपुष्पांबया मुदा ॥ ६

त्वदंशभूतया गौरि जन्तूनां ज्ञानदायकः ।
स्तंबेरमकराकारे मम लिङ्गे वसाम्यहम् ।। ७

तत्र पश्यातिशोभिष्ठं क्षीरनद्यास्तटे शिवे ।
काशीकैलासशोभिष्ठं कांची नगरमात्मनः ।। ८

प्राणभूतस्थलं तत्तु चूतमूले जगत्प्रसूः ।
मूलभूता तवात्रैव मूर्तीनां चैव पार्वति ।। ९

कामाक्षी करुणामूर्तिः कंपातीरे तपस्विनी ।
लोकरक्षार्थमावासं कुरुते भक्तवत्सला ।। १०

एकाम्रलिङ्गं शोभिष्ठं कामाक्षीकुचलाञ्छ नम् ।
मदीयं भाति तां देवीं कामाक्षीं कामरूपिणीम् ।। ११

एकाम्रेशं च मां चापि ध्यायन्तीहार्चयन्ति ये ।
ऐहिकामुष्मिकाश्चैव ह्यणिमाद्याः श्रियो नृणाम् ।। १२

सिध्यंति ज्ञानमात्मीयं त्रिकालकलया युतम् ।
इत्यावेद्य च कामाक्षीं रसालस्य प्रदक्षिणम् ।। १३

आकाशे वृषभारूढो दक्षिणाभिमुखः शिवः ।
पार्वतीं च पुनः प्राह क्षीरनद्याश्च दक्षिणे ।। १४

विरिञ्चि .गरं पश्य देवि कैलाससन्निभम् ।
मदीयं स्मरणादेव मुक्तिदं द्रोणपर्वतम् ।। १५

तत्र पश्यातिशोभिष्ठं मुनिवन्द्यं मदीयकम् ।
क्षीराभिषेकसमये त्वन्मूर्ति र्दृश्यते शिवे ।। १६

ऋषिवन्द्यस्य लिङ्गे मे ततो वृद्धगिरीश्वरम् ।
मणिमुक्तानदीतीरे मदीये ये मृताः प्रिये ।। १७

तेषां वृद्धाद्रि शिखरे श्रोत्रवामेतरे मया ।
त्वया सन्दिश्यते मुक्तेः पञ्चाक्षरमनुत्तमम् ।। १८

पुण्ये प्रधानभूतायाः कावेर्या उत्तरे तटे ।
चिदंबरे ज्ञानसभा भासते मम पार्वति ॥ १९
चित्सभां ये दर्शयंति ते मुक्तास्स्युश्चतुष्पदैः ।
सदाशिवस्य मन्मूर्तेस्सच्चिदानन्दताण्डवम् ॥ २०
आविर्भवन्तं देवी च चिदंबरं सहांबिकम् ।
दर्शयंति चिदानन्दं तेषां दर्शनतः क्षणे ॥ २१
भवेत्त्रिविधमानन्दं तच्चिह्नं रोमहर्षणम् ।
शिवकामेश्वरीं चैव श्रीमूलेशं मदीयकम् ॥ २२
ताण्डवं सच्चिदानन्दं ब्रह्मणां कोटयः पुरा ।
अपश्यन् विष्णुबृन्दानि ब्रह्ममानससंभवाः ॥ २३
ऋषयोऽपूजयन्देवाः कोटिसंख्याश्च पार्वति ।
ताण्डवेन मया तेषां ब्रह्मादीनां दिवौकसाम् ॥ २४
मुनीनां सनकादीनां सच्चिदानन्ददायकम् ।
नृत्तं कृतं सभास्थानं चतुर्लक्षं ममाम्बिके ॥ २५
चिदंबरादिदेवानां मध्यस्थानस्य पार्वति ।
प्रमाणं चित्सभेशस्य शिवगंगा प्रकाशते ॥ २६
चिद्गंगायाममायां ये स्नान्ति प्राप्य शिवाकृतिम् ।
गिरिजे मत्सभां यांति शिवगङ्गानिमज्जनात् ॥ २७
ततो ब्रह्मपुरी भाति काशीकैलाससन्निभा ।
कावेर्या दक्षिणे तीरे चोत्तरे श्वेतकाननम् ॥ २८
छायारण्यं मदीयं च काशीसदृशमुत्तमम् ।
कावेर्या दक्षिणे तीरे पुण्यं घटपुरं महत् ॥ २९
काशीकैलाससदृशं भाति वल्मीककाननम् ।
पुरं भाति मम स्थानं कमलालयनामकम् ॥ ३०

काशीसमानमाभाति वेदारण्यं पयोदधेः ।
वर्तते पश्चिमे तीरे ताम्रपर्ण्यास्तटे स्थितम् ।। ३१
शालिवाटीश्वरं पश्य भूकैलासेन सन्निभम् ।। ३२
कावेर्या दक्षिणे तीरे कुंभघोणं मम स्थलम् ।
कैलाससदृशं पूर्वे कुंभघोणस्य पावनम् ।। ३३
मध्यार्जुनमिति ख्यातं काशीसदृशमंबिके ।
कावेर्या उत्तरे तीरे श्रीमन्मङ्गलनायिकाम् ।। ३४
चूतारण्यं च वल्लीशं त्रिकोटिघटजस्थलम् ।
कैलाससदृशं पश्य श्री तालारण्यमद्भुतम् ।। ३५
कैलाससदृशं पश्य माननर्तनशंकरम् ।
गौरीमायूरमाभाति काशीसदृशमंबिके ।। ३६
कावेर्या दक्षिणे तीरे योजनद्वयसम्मिते ।
पुण्याख्यनलिनीतीरे श्री वाञ्छयं मम पार्वति ।। ३७
काश्याधिक्यं तत्र पश्य कैलाससदृशं भुवि ।
षट्षष्टिकोटि संख्यानां क्षेत्राणां मम पार्वति ।। ३८
काशीमुखानां भूभागे श्री वाञ्छ्यस्थलमुत्तमम् ।
श्री वाञ्छ्यलिङ्गं श्रेष्ठं तत्तीर्थानामुत्तमोत्तमम् ।। ३९
पुण्यपुष्करिणी गौरीमिति चोक्त्वा वृषे शिवः ।
स्थाप्यांबरे समालोक्य श्री वाञ्छ्यं तत्सदाशिवः ।। ४०
पश्चिमाभिमुखे लिङ्गे तत्र श्रीवाञ्छ्य भूतले ।
आविर्बभूव माघस्य मखे शुक्ले सुशोभने ।। ४१
मुहूर्ते पुष्कलाद्यास्ते ववर्षुः कुसुमान्यपि ।
ततो लिङ्गे प्रविष्टे तु ननृतुश्चाप्सरोगणाः ।। ४२
दिवि दुन्दुभयो नेदुर्जगुरुत्सववासरे ।
आविर्भावदिने माघे मखे श्रीवाञ्छ्य नायकः ।। ४३

उत्सवाकाररूपोऽसौ जगतामुत्सवप्रदः ।
कुमाराभ्यां गणैः सार्धं शंभुर्वृषभवाहनः ।। ४४
अवरुह्य वृषाद्देवी पार्वती परदेवता ।
सानन्दा भूतलं तस्य श्रीवाञ्छ्यस्य कृतांजलिः ।। ४५
कल्पवृक्षसमाकीर्णं योगिसिद्धनिषेवितम् ।
चचार परितस्तस्य पुण्यपुष्करिणीतटे ।। ४६

इति श्री ब्रह्माण्डोपपुराणे श्री वाञ्छ्यमाहात्म्ये पंचमोध्यायः ।।

## ।। सप्तदशोऽध्यायः ।।

अगस्त्यः—

कैलासादागता गौरी पुण्याख्यनलिनीं शुंभाम् ।
प्रदक्षिणत्रयं कृत्वा श्री वाञ्छ्येशं पुनः पुनः ।। १
साष्टाङ्गं प्रणिपत्याथ पुण्यपुष्करिणीतटे ।
पूर्वभागं समासाद्य पार्वती भक्तिसंयुता ।। २
सङ्कल्प्य पाणौ सन्धाय पवित्रं स्वर्धुनीनदीम् ।
पुण्याख्यनलितीनीर्थे पावने च जगद्भुवाम् ।। ३
पुष्करादीनि तीर्थानि सस्मार मुनिपुङ्गवाः ।
पार्वतीस्मरणादेव गङ्गा मकरवाहना ।। ४
सर्वाभरणशोभिष्ठा नर्मदाद्याभिरुज्ज्वला ।
आपगाभिर्बुद्बुदैश्च स्वच्छैः क्षीरनिभैर्जलैः ।। ५
आविरासीन्मुनिश्रेष्ठाः पुण्यपुष्करिणीजले ।
माघे मासि मखे शुक्ले प्रादुर्भूतां सुरापगाम् ।। ६
सन्तुष्टहृदया वीक्ष्य पार्वती वन्द्य मज्जनम् ।
कृत्वा त्रिवारं संजप्य द्वादशाकृति मानसे ।। ७

पुण्यपुष्करिणीतीर्थे सर्वपापापनोदने ।
पंचाक्षरं नमोऽन्तं च जपन्ती करपंकजे ।। ८
आरुह्य तीरं शोभिष्ठं क्षौममाच्छाद्य शोभनम् ।
भूतिं गृहीत्वा पापघ्नं सम्मृज्य च जलेन वै । ९
ललाटादौ त्रिपुण्ड्रं च त्रिमूर्त्यात्मकमुल्बणम् ।
सन्धार्यैकमुखं कान्तं रुद्राक्षं विद्रुमोज्ज्वलम् ।। १०
मालामुद्धार्य संजप्याष्टोत्तरशतं पुनः ।
पञ्चाक्षरं षडंगं वा पञ्चगव्यं गवां पयः ।। ११
घृतं दधि समादाय पुष्करं कदलीफलैः ।
पनसाम्रफलैरेव पुण्यपुष्करिणीजलैः ।। १२
पञ्चामृतैर्नालिकेरैर्लिङ्गे श्री वाञ्छ्यशंकरे ।
हृदयेशं समावाह्य पञ्चाक्षरमनोर्जपैः ।। १३
अभिषिच्य महालिङ्गं श्री वाञ्छ्ये क्षणमीशितुः ।
पद्मैश्च पद्ममालाभिरलंकृत्य च भूषणैः ।। १४
आच्छाद्यालिप्य गंधैश्च दीपान् प्रज्वाल्य गोघृतैः ।
धूपमाज्ययुतं दत्वा तालवृन्तादि चामरम् ।। १५
दत्वा षड्विधमन्नं च पायसं सुरभेः पयः ।
घृतं दधि फलं भक्त्या निवेद्य परमेशितुः ।। १६
पुष्पं श्री वाञ्छ्यनाथाय नलिनीसंभवं पुनः ।
योऽपामिति ऋचा गौरी दत्वा नीराजनं पुनः ।। १७
तुष्टाव पार्वती देवी शंभुं श्री वाञ्छ्यनायकम् ।
श्री वाञ्छ्येश दयाधार नमस्ते भक्तवत्सल ।। १८
नमःशिवाय ते तुभ्यं नमःशिवतराय ते ।
इति स्तुतो महादेवो लिङ्गाच्छ्रीवाञ्छ्य नायकः ।। १९

भाग्यभाक्प्राप्तकल्याण्याः पार्वत्याः पुरतो ज्वलन् ।
प्रादुरासीद्वृषारूढः कोटिसूर्यसमप्रभः ।। २०
गङ्गाचन्द्रजटाचूडः कृत्तिवासाः पिनाकधृक् ।
शूलाद्यान्यायुधान्येव धारयन् करपंकजैः ।। २१
प्रसन्नवदनांभोजः प्रादुर्भूतो दिनात्यये ।
माघमासे पूर्णिमायां मखे लोकोत्सवे शिवः ।। २२
आलिङ्ग्य पार्वतीं प्राह पार्वति त्वत्सुतोषितः ।
अहं च पूजया भक्त्या पद्मपुष्पार्चया भृशम् ।। २३
अनन्तवेदश्रेष्ठेन स्तुत्या पञ्चाक्षरेण मे ।
सप्तानामपि कोटीनां महतां प्रवरेण वा ।। २४
मन्त्राणामपि सन्तुष्टो दिनेनैकेन ते पुनः ।
प्रत्यक्षोऽभवमिष्टं ते ददामि वृणु वाञ्छितम् ।। २५
वरं पप्रच्छ देवेशं श्री वाञ्छ्ये पार्वती इति ।
श्री वाञ्छ्येश त्वयि मम भक्तिरस्त्वतुला सदा ।। २६
मदाराधित एतस्मिन् त्वां लिङ्गे ह्यर्चयंति ये ।
पद्मैर्वान्यसुमैरेव मत्कृतं कूपजं जलम् ।। २७
पुण्याख्य नलिनी तीर्थमुद्धृत्य स्माभिषिच्य च ।
निवेदनं यथाशक्ति माघमासे मखे दिने ।। २८
मत्प्रत्यक्षदिने पूजां कल्पयन्ति वसन्ति ये ।
तेषामपि भवान् शंभो प्रसन्नो भव सर्वदा ।। २९
अष्टैश्वर्यप्रदो ह्यत्र पुण्याख्यनलिनीतटे ।
सान्निध्यं सुप्रसन्नस्त्वं श्री वाञ्छ्ये लिङ्ग उत्तमे ।। ३०
विशेषान्माघमासेऽत्र त्वदुत्सवसमागमे ।
प्रीत्यर्थं तेऽत्र गाणिक्यं कृत्तिकाभानुवासरे ।। ३१

सोमवारे विशेषेण स्नात्वा सेवां करोति यः ।
तद्देहक्षुद्रसंघं च संहर त्वं महेश्वर ।। ३२

पुण्य पुण्करिणीतीरे हुतं जप्तं कृतं त्वणु ।
पुण्यं कोटिगुणं काश्याः वरमस्त्विदमेव हि ।। ३३

श्री शिवः—

रन्तुं त्वयात्र श्री वाञ्छचे पुण्यपुष्करिणी तटे ।
भाग्यं भोक्तुं कुमाराभ्यां कैलासादागतैर्गणैः ।। ३४

वस्तुं वाञ्छाम्यहं देव्या श्री वाञ्छचेशप्रियेच्छया ।
प्रार्थितान्यं वरं दत्वा पार्वत्या विहरन्सदा ।। ३५

जगतां मिषतां भाति पार्वत्या वरतो द्विजाः ।
अनन्त भक्तियुक्ता सा पार्वती रजताचलात् । ३६

भाग्यभाक्प्राप्तकल्याण्याः स्वांशतो भिन्नयाऽशिवः ।
सदाशिवः प्रविश्यात्र श्री वाञ्छचेऽनन्तशक्तिमान् ।। ३७
चतुर्वर्गप्रदो भाति काश्याधिक्ये मुनीश्वराः ।।

इति श्री ब्रह्माण्डोपपुराणे श्री वाञ्छच माहात्म्ये षष्ठोऽध्यायः ।।

---

## ।। अष्टादशोध्यायः ।।

अगस्त्यः-

श्री वाञ्छचेशस्य माहात्म्यं नलिनासनकारणम् ।
पुण्याख्य नलिनी नामतीर्थस्य मुनिपुङ्गवाः ।। १

वक्ष्ये शृणुध्वं श्रोतॄणां ब्रह्मात्मप्रतिपादकम् ।
आदौ कल्पस्य पाद्मस्य श्री वाञ्छचे धरणीतले ।
धृताण्डकोट्या कल्याण्या पुण्याख्यनलिनीजले ।। २

श्री वाञ्छचेशो रहस्साकं जलक्रीडां मुदान्वितः ।
कृत्वा तीरं समासाद्य श्री वाञ्छचे लिङ्ग उत्तमे ।। ३

निवासमकरोद्देवी कल्याणी जगतां श्रियै ।
वृद्ध्यै कटाक्षमकरोत्पुण्याख्य नलिनीजले ।। ४
भाग्यभाक्प्राप्तकल्याण्याः कटाक्षेण जगच्छ्रियै ।
श्री वाञ्छ्य भूमौ पुण्यायां पुष्करिण्यामजायत ।। ५
सहस्र पत्र शोभिष्टं पद्मं स्वर्णमयं तदा ।
संजातो नलिने ब्रह्मा बभूवासनवर्जितः ।। ६
तदेवासनमासित्वा दध्यौ यन्नलिनासनः ।
स पुण्यनलिनीतीरं परितोऽ लोकयत्ततः ।। ७
भाग्यभाक्प्राप्तकल्याणीं ज्योतिर्लिङ्गं च दक्षिणे ।
पुण्यपुष्करिणी नाम सरसं पावनं शभम् ।। ८
पश्चिमाभिमुखं वीक्ष्य सन्तुष्टो हृद्यचिन्तयत् ।
उत्पत्तेर्मूलभूतां तां कल्याणीं शंकरं सृजेः ।। ९
सामर्थ्यं मज्जनात्सिध्येदिदं चित्ते मुनीश्वराः ।
पुण्याख्यनलिनीतीर्थे स्नात्वा संकल्प्य धारयन् ।। १०
कुशं पवित्रं संजल्प्य गङ्गेति यमुनेति च ।
अब्लिंगांश्चैव मन्त्रांश्च देवतर्पणमेव च ।। ११
ऋषीणां तर्पणं चैव पुण्यपुष्करिणी जले ।
पितॄणां च तथा कृत्वा तटमालभ्य शोभनम् ।। १२
क्षौममाच्छाद्य वसनमथ भस्माभिधारणम् ।
मन्त्रं षडङ्गं भसितमग्निरित्यादि मन्त्रतः ।। १३
ईशानाम्ना गृहीत्वा तद्भस्म हस्ते निधाय च ।
आपो वा इति मन्त्रेण षडक्षरजपेन वा ।। १४
आदाय जलमभ्युक्ष्य भसितं मन्त्र संहितम् ।
मानस्तोकेति मन्त्रेणानामिकांगुष्ठमध्यमैः ।। १५

मध्यमैर्वा पुनश्शीर्षे भस्मना च त्रिपुंड्रकम् ।
ललाटे हृदये चैव बाहुमूलद्वये तथा ।। १६
भुजयोरन्तरे चैव मणिबन्धे च धारयेत् ।
नाभिमूले च जठरे कर्णजंघान्तरालयोः ।। १७
क्रमात्त्रिपुण्ड्रं संधार्य समाघ्रायांजलीमपि ।
भस्म गंधं च संकल्प्य शुद्धमाचमनं ततः ।। १८
ओमिति द्वादशावृत्ति जपन्माषमितं जलम् ।
आदाय त्रिस्तथा पीत्वा शुद्धमाचमनं पुनः ।। १९
कृत्वोपस्पृश्य संध्यां च समाप्याथ यथाविधि ।
प्रातर्भर्गवरां भक्त्या गायत्रीं वेदमातरम् ।। २०
अष्टोत्तरशतं जप्त्वा ब्रह्मयज्ञं समाप्य च ।
अष्टोत्तरशतं जप्त्वा पञ्चाक्षर मनुं पुनः ।। २१
सतारं पूजनं कृत्वा रुद्रार्चन विधानतः ।
श्री वाञ्छ्य नायकस्यास्य श्रौतेन कमलासनः ।। २२
पञ्चगव्यं सुसंपाद्य क्षीरं दधि घृतं मधु ।
शर्करां नालिकेरं च कदलीफलमुत्तमम् ।। २३
पनसाम्रफले चैव तैलमिक्षुरसं तथा ।
एलालवङ्गसंयुक्तं पुण्यपुष्करिणीजले ।। २४
आदाय हेमंकुभेन संपूर्य नलिनासनः ।
श्री वाञ्छ्यलिङ्गशरणं भविष्यत्काम्यदायकं ।। २५
ध्यायंस्तत्पुरुषे वक्त्रे शतरुद्रीयमुत्तमम् ।
पावमानीमपां मन्त्रं शान्तिमन्त्रं यजुर्भवम् ।। २६
जपित्वा द्वादशावृत्ति लिङ्गं श्री वाञ्छ्य नायकम् ।
भूषणैस्समलंकृत्य शंभुं श्रीवाञ्छ्य नायकम् ।। २७

शाल्यन्नं पायसं चैव क्षीरं दधि घृतं तथा ।
गुडं फलरसं सम्यक्पनसानां च षड्विधम् ।। २८
मुद्गाद्यन्नं निवेद्याथ तांबूलं शंभवे ददौ ।
नीराजनं पुनर्दत्वा मन्त्रपुष्पं समर्प्य च ।। २९
स्तोतुं श्री वाञ्छ्यशंभुं तं प्रारेभे नलिनासनः ।
ब्रह्मस्तुतिः—
नमस्ते जगदाधार नमस्ते भक्तवत्सल ।। ३०
नमस्ते देवदेवेश नमस्ते गिरिजापते ।
नमस्सोमाय सततं भास्वते ते नमो नमः ।। ३१
ऋताय ते नमस्तुभ्यं सत्याय पररूपिणे ।
ब्रह्मणे ते नमस्तुभ्यं पुरुषाय नमो नमः ।। ३२
कृष्णपिङ्गलरूपाय नमस्ते ह्यूर्ध्वरेतसे ।
विरूपाक्षाय ते नित्यं विश्वरूपाय ते नमः ।। ३३
जगत्सद्रूपरूपाय लोकातीताय ते नमः ।
पुरटं भूषणं यद्वत्पुरटं भूषणं न हि ।। ३४
श्री वाञ्छ्येश महाभाग शरणागतवत्सल ।
त्वामेव शरणं प्राप्तस्त्वयि भक्तिमचंचलाम् ।। ३५
देहि मे सृष्टिसामर्थ्यं जगतां वाञ्छितां श्रियम् ।
मया कृतेन स्तोत्रेण सन्तुष्टो भव शङ्कर ।। ३६
श्री वाञ्छ्येशस्स्तुतस्तेन ब्रह्मणाब्जासनेन तु ।
भाग्यभाक्प्राप्तकल्याण्या सन्तुष्टः परमेश्वरः ।। ३७
प्रादुरासीद्वृषारूढो माघमासे मखे शिवः ।
गङ्गाचन्द्रकलाचूडं भस्मोद्धूलितविग्रहम् ।। ३८
फाले त्रिपुण्ड्रशोभिष्ठं सर्पमालाविराजितम् ।
मणिकुण्डलशोभिष्ठं हेमकंकणभूषितम् ।। ३९

बन्धुकाभांबरेणैव वीतं स्वर्णमयेन च ।
वीतं यज्ञोपवीतेन मुक्ताविद्रुमशोभितम् ।। ४०
रुद्राक्षमेकवक्त्रं च वहन्तं मालिकामपि ।
श्री गन्धतिलकेनापि मंजुफालावभासुरम् ।। ४१
नूपुरारावपादाब्जं कोटिसूर्यसमप्रभम् ।
कल्याण्या च कुमाराभ्यां गणैर्नन्द्यादिभिस्सह ।। ४२
कल्याणकरमीशानं लिङ्गाच्छ्रीवाञ्छच शब्दितात् ।
उत्थितं शूलमुख्यानि वहन्तं हस्तपंकजैः ।। ४३
वृषे समास्थितं देवं करुणारस वर्षिणम् ।
श्री वाञ्छचेशं समालोक्य जगद्रक्षाधुरन्धरम् ।। ४४
रोमांचितांगो हृदये ध्यात्वैवं नलिनासनः ।
साष्टाङ्गं प्रणमन् भक्त्या श्री वाञ्छचेशपदांबुजम् ।। ४५
श्री वाञ्छचेशो दयासारः कराभ्यां नलिनासनम् ।
आलिंग्योद्धृत्य चाघ्राय मूर्ध्नि हर्षमुपेयिवान् ।। ४६
ब्रह्माणमब्रवीद्देवो नलिनासन पूजया ।
अर्चया पद्मपुष्पेण बिल्वैरेव त्रिवृद्दलैः ।। ४७
अहं श्री वाञ्छचलिङ्गं मे माघमासे दिने तथा ।
चतुर्दशियुते कृष्णे पक्षे पूजादिनं तव ।। ४८
दिनेनैकेन नितरां प्रादुर्भूतोऽहमब्जज ।
शिवरात्रि दिनस्यान्ते सर्वभूतसुखावहे ।। ४९
आविरासं स्तवेनापि प्रणिपातेन तोषितः ।
वृतं त्वया जगत्सृष्टौ दत्तं ते नलिनासन ।। ५०
सामर्थ्यमखिलं चास्तु त्वयाऽत्र प्रार्थितं विधे ।
वरं दत्तं मया भक्तिं मयि वाञ्छचां श्रियं च ते ।। ५१

आयुष्मान् भव च ब्रह्मन् त्वमद्य नलिनासन ।
त्वदर्चिते च मल्लिंगे श्री वाञ्छ्येऽथ समन्त्रकम् ।। ५२
बिल्व पत्रैर्जलेनैव पुण्यपुष्करिणीभवैः ।
कल्याणी कूपजैस्तीर्थैरभिषिच्याच्य भक्तितः ।। ५३
धूपं दीपं च मत्प्रीत्यै यथाशक्ति निवेदनम् ।
दत्वा श्री वाञ्छ्यनाथाय मह्यं त्वत्पूजिताय वै ।। ५४
शिवरात्रि दिने वापि माघमासे विशेषतः ।
चैत्रादिषु च मासेषु द्वादश्यां सोमवासरे ।। ५५
अथ भानोर्दिने वापि सङ्क्रान्तावुपरागयोः ।
पूर्णिमायाममायां वा यस्मिन्नस्मिन् समर्चनम् ।। ५६
यथाशक्त्यन्नपानाद्यैर्मम लिङ्गे समर्पणम् ।
एवं कृत्वा तथा पूजां मह्यं भक्त्या वसंति ये ।। ५७
श्री वाञ्छ्ये दिनमेकं वा तेषामायुष्यवर्धनम् ।
बलं वा पुत्रसंपद्वा धनधान्यादिकं तथा ।। ५८
वंशवृद्धिर्भवेदाशु श्री वाञ्छ्येशकृपाबलात् ।
मत्प्रसादाच्च देहान्ते मां शिवं समवाप्नुयुः ।। ५९
पुण्याख्यनलिनीतीरे मम लिङ्गस्य सन्निधौ ।
श्री वाञ्छ्येऽत्र हुतं जप्तं कृतं पूजनमण्वपि ।। ६०
पञ्चक्रोशमिते क्षेत्रे काश्याधिक्ये च भूसुराः ।
काश्यादौ च कुरुक्षेत्रे कृतात्पुण्याच्छताधिकम् ।। ६१
फलमाप्नोति यः कश्चित्सत्यमेव मदाज्ञया ।
पुण्याख्य नलिनीतीर्थे पञ्चक्रोशे च गोष्पदे ।। ६२
तीर्थे गङ्गासमे स्नात्वा रुद्रार्चनविधेस्ततः ।
प्रकारेण शिवायेति मन्त्रेणानेन वा पुनः ।। ६३

षडक्षरेण मन्त्रेण त्रियंबकऋचा पुनः ।
सूक्तेनापि मदीयेन मन्त्रेणापि समर्चनम् ।। ६४
करोति तस्य कामार्थौ धर्ममोक्षौ भवन्ति हि ।
पुत्रमित्रादि संपत्तिर्वंशवृद्धिर्मदाज्ञया ।। ६५
इहैव भुक्त्वा भोगांश्च देहान्ते मां प्रपद्यते ।
कमलासन मत् प्रीत्यै कैंकर्यं कुरु भक्तितः ।। ६६
इत्यादिश्य महादेवः श्री वाञ्छ्ये लिङ्ग अत्तमे ।
आविर्भूय प्रसन्नश्च श्री वाञ्छ्ये भजतां नृणाम् ।। ६७
कामप्रदो मुनिश्रेष्ठा निदेशेन महेशितुः ।
अब्जासनस्तु श्रीवाञ्छ्ये कैंकर्यं चोत्सवं मुदा ।।
कर्तुमारब्धवान् ब्रह्मा नलिनासनभास्वरः ।। ६८

इति श्री ब्रह्माण्डोपपुराणे श्री वाञ्छ्य माहात्म्ये सप्तमोऽध्यायः

## एकोनविंशोऽध्यायः

ततस्सृष्ट्वा जगद्ब्रह्मा भूरादि मनसा द्विजाः ।
भूधरं कर्णिकाकारं मेरुं सृष्ट्वा महीधरान् । १
पर्यन्तपर्वतांस्तस्य मेरोः केसरसन्निभान् ।
ब्रह्मा षष्टिसहस्राणि तत्तत्स्थानेषु चार्पयन् ।। २
धरां धारयितुं तद्वद्दृढस्थानेषु विष्टपम् ।
अंकुरानायसाकारान् दारुरूपां स्ततो विधिः ।। ३
जगत् प्रपंचस्थानेषु ब्रह्मणाऽसर्जि तत् सुखम् ।
षट्षष्टि कोटि तीर्थानि तीर्थानि गिरिजापतेः ।। ४
क्षेत्राणि स्थापयामास काश्याधिक्यमिदं स्थलम् ।
निर्ममे मनसा रम्यं श्री वाञ्छ्यं कमलासनः ।। ५

गर्भागारं देवगृहमन्तरालस्य मण्डपम् ।
ततस्स्वर्णमयानेवोत्सवार्थं चैव विग्रहान् ॥ ६
श्री वाञ्छ्य नायकाद्यान्वै रम्यमूर्तीननेकशः ।
उत्पाद्य शैवमार्गेण प्रतिष्ठाप्य शिवद्विजैः ॥ ७
कारयित्वा विधानेन होमं ब्राह्मणभोजनम् ।
वीथिकाश्शोभनाश्चै व कारयित्वा च शास्त्रतः ॥ ८
माघमासे शुक्लपक्षे पञ्चम्यामंकुरार्पणम् ।
वास्तुहोमं यथावत्तु ध्वजारोपं शिवागमैः ॥ ९
कामिकाद्यैरलंकृत्य यागशालां च वीथिकाम् ।
पताकाभिः पूर्णकुंभैः रङ्गवल्लीभिरुज्ज्वलाम् ॥ १०
कृत्वाऽभिषेकनैवेद्यैः श्री वाञ्छ्येश्वरनायकम् ।
कल्याणीं तर्पयित्वा च फलकैर्मौक्तिकैरपि ॥ ११
अलंकृत्य स्वर्णमयैर्भूषणैर्मल्लिकादिभिः ।
वृषादिवाहने स्थाप्य छत्रचामरकाश्शुभाः ॥ १२
परिच्छदैर्वाहयित्वा तालवृन्तं सुगन्धिदम् ।
स्वयमुद्वाह्य भक्त्या च करेण नलिनासनः ॥ १३
स्वसृष्टैर्मुनिभिश्चैव देवेन्द्रादिभिरन्वहम् ।
गणैरप्सरसां नित्यं नाटयित्वा महोत्सवे ॥ १४
गानैर्वाद्यैर्घोषयित्वा दीपालीभिर्महेशितुः ।
श्री वाञ्छ्यनायकस्यापि वाहनोत्सवमेव च ॥ १५
निर्वर्त्य सायं प्रातश्च विशेषाद्देवपूजनम् ।
मुद्गसारादिभक्ष्याणि फलानि च निवेद्य च ॥ १६
शाल्यन्नं पायसं चैव क्षीरं दधि घृतं मधु ।
सर्वं निवेद्य देवाय श्री वाञ्छ्येशाय चोत्सवे ॥ १७

रथे स्थाप्य महेशानं रम्ये श्रीवाञ्छयनायकम् ।
कल्याणीं च रथे स्थाप्य कृतानुव्रजनैस्सुरैः ॥ १८
मुनिश्रेष्ठैर्नारदाद्यैर्गमयित्वा रथोत्सवम् ।
माघमासे मखे ब्रह्मपूर्वे श्री वाञ्छ्यभागतः ॥ १९
तीर्थमुत्पाद्य निर्वर्त्य तीर्थोत्सवमनुत्तमम् ।
स्तुवन् श्री वाञ्छयदेवेशमुत्सवे नलिनासनः ॥ २०
उत्सवान्ते महेशोऽपि नलिनासन मादरात् ।
सन्तोष्यालिङ्ग्य कल्याण्या नलिनासनमब्रवीत् ॥ २१
नलिनासन तेऽद्याहं त्वत्कृतेनोत्सवेन च ।
कैंकर्येणातितुष्टोऽहं सुखी भव सुखी भव ॥ २२
सत्यलोके गिरा सार्कं लोकवृद्धि धुरंधरः ।
ब्रह्मीभूय ततः पश्चान्मां समाप्नुहि पद्मज ॥ २३
त्वत्सृष्टास्सकलाश्चैव प्रजा वर्धन्तु मन्मुदे ।
मदुत्सवे ये मामेव कल्याणीमुत्सवाकृतिम् ॥ २४
सेव्योत्सवादिमारभ्य चोत्सवान्तं विशेषतः ।
पूजनं चार्चनं दानं हुतं पुण्यं च यत्कृतम् ॥ २५
मत्कृते च द्विजायात्र काश्याधिक्ये यथामति ।
यथाशक्ति धनं धान्यमन्नं गोष्पदमेव वा ॥ २६
भूमिदानं कल्पयित्वा भक्ताय शिवयोगिने ।
एकरात्रं द्विरात्रं वा त्रिरात्रं वा क्षणन्तु वा ॥ २७
निवसंतीह तेषां च मन्माहात्म्यरतात्मनाम् ।
आयुष्यं बलमारोग्यं पुत्रसंपद्रिपोर्जयम् ॥ २८
भवत्वाब्रह्मपर्यन्तं तत्कुलं वोत्तरोत्तरम् ।
कल्याणीसहितं नित्यं श्री वाञ्छयेशं सदाशिवम् ॥ २९

पुण्याख्य नलिनीतीरे वसन्तं ह्युत्सवाकृतिम् ।
मदुत्सवे वा श्रीवाञ्छ्ये ये वसंति द्विजातयः ।। ३०
वाञ्छितानि भवंत्वेषां ते भवंतु धराधिपाः ।
मुनिश्रेष्ठा भवन्त्वद्धा वेदविद्या विशारदाः ।। ३१
कल्पे श्वेतवराहाख्ये भविष्यन्तु मुनीश्वराः ।
एवमेनमनुग्राह्य नलिनासनमीश्वरः ।। ३२
श्रीवाञ्छ्ये सकलान् कामान् कल्याणाकारविग्रहः ।
ददन्विभासते नित्यं भक्तानामार्तिभंजनः ।। ३३
नारदाद्या मुनिश्रेष्ठास्सुराः पाद्मे ह्यपूजयन् ।
श्री वाञ्छ्यनायकं देवं भक्तरक्षाधुरन्धरम् ।। ३४
कल्पान्तरेषु मुनयो विष्ण्वाद्याश्च सुरेश्वराः ।
अवतारान् विचिन्वन्ति जंबूद्वीपे युगं प्रति ।। ३५
धर्मसंस्थापनार्थाय द्विजाः कारणदेहिनः ।।

इति श्री ब्रह्माण्डोपपुराणे श्री वाञ्छ्य माहात्म्ये अष्टमोध्यायः ।।

## ।। विंशोऽध्यायः ।।

अगस्त्यः -

श्री वाञ्छ्येशस्य माहात्म्यं प्रवक्ष्यामि च पावनम् ।
अस्मिन् श्वेतवराहाख्य कल्पे श्री वाञ्छ्य भूतले ।। १
सुमेरोः पश्चिमे भागे मेरुखण्डे ऋषिद्विजैः ।
सुवर्णसदृशं पीतं गङ्गापुष्करपायिभिः ।। २
भाति पश्चिमभागे तु मेरुखण्डस्य शोणितम् ।
नाम मण्डलमाभाति तस्मिञ्छोणितमण्डले ।। ३
बाणासुरो वसन्नित्यं नर्मदासैकते शुभे ।
आगत्य शिवलिङ्गानि द्विसाहस्रं समर्चयेत् ।। ४

गाणापत्यं ददौ तस्मै बाणाय च सदाशिवः ।
शोणिताख्यस्य देशस्य पश्चिमे मन्दराचलः ।। ५
त्रिंशत्सहस्र प्रमितयोजनायामविस्तृतः ।। ६
तस्य पश्चिमदेशे तु वट वृक्षो महान्वरः ।
सहस्र योजनोच्छ्रायस्तस्य पत्र पुटे हरिः ।। ७
आदि नारायणो वासमकरोऽग्रादिमे शिवः ।
मध्ये ब्रह्मा चांतिमे तु श्रीमान्नारायणो द्विजाः ।। ८
तत्रांगुष्ठनखो नाम पर्वतोऽखर्वमूर्तिमान् ।
अथाभ्यालोकयं देवादन्तरा श्वेतनामके ।। ९
काशीमुखानि स्थानानि प्रलयाविषयाणि वै ।
स्थानानि तान्यलक्ष्यन्त लक्ष्मीनारायणेन च ।। १०
सोऽयं नारायणस्तस्माद्वटस्थानात्समागतः ।
श्री वाञ्छ्यपश्चिमे भागे कृत्वा श्रीमत्पदं वसन् ।। ११
शिवपूजारतो ब्रह्मा श्रीवाञ्छ्यं समुपागतः ।
आराधनात्कवेरस्य नलिनेऽतिप्र काशतः ।। १२
कन्याया दक्षिणे स्थानं श्री वाञ्छ्यं काशते यतः ।
काशीस्थलमिति ख्यातं काश्याधिक्यमिति श्रुतम् ।। १३
प्रलयाब्धिजलेनैतदनाक्रान्तं तु तेन हि ।
श्री वाञ्छ्यं काशते लोके काशीसममिति स्मृतम् ।। १४
पुलिनैरावृतं लिङ्गं कावेर्या दक्षिणे तटे ।
योजनद्वयमात्रेण श्री वाञ्छ्येशस्य सिद्धिदम् ।। १५
भूषणं जगतां लिङ्गं ब्रह्मणा यत् प्रकाशितम् ।
नृणां च काश्यपादीनां चित्प्रकाशकमद्भुतम् ।। १६
लिङ्गभूषणमेतत्स्याच्छ्रीवाञ्छ्य धरणीतलम् ।
गौरीकल्याणसमये मामाहूय सदाशिवः ।। १७

कल्याणं कुरु निर्विघ्नं सङ्गच्छेत्यवदत्ततः ।
ओषधिप्रस्थभूभागादहं प्राप्तश्च मार्गतः ॥ १८

आम्नायकाननं गन्तुं देवस्थानमिदं तु नः ।
प्रकाशितं शिवेनैतल्लिङ्गं श्री वाञ्छ्य भूतले ॥ १९

पूजकानां क्रमं वक्ष्ये वरप्राप्तिं यथाक्रमात् ।
यथामति प्रवक्ष्यामि धर्मकामार्थमोक्षदम् ॥ २०

काश्यपः पूज्य देवेशं श्री वाञ्छ्येऽत्र नभःस्थले ।
ऋषीणामपि सप्तानां षष्ठो वै भासते द्विजः ॥ २१

ब्रह्मणो मानसः पुत्रो वसिष्ठोऽत्रिश्च गौतमः ।
श्री वाञ्छ्यनाथं संपूज्य दिवि सप्तर्षिमण्डले ॥ २२

संभूतावप्यरुन्धत्या साकमप्यनसूयया ।
विभूत्या ब्रह्मभूयस्त्वं श्री वाञ्छ्येशवरादपि ॥ २३

भरद्वाजस्सुसंपूज्य श्री वाञ्छ्येशं कवीश्वरः ।
अभूच्छ्रीवाञ्छ्यनाथं तं विश्वामित्रो महायशाः ॥ २४

पूज्य ब्रह्मर्षिरभवज्जमदग्निर्महातपाः ।
अभूच्छ्रीवाञ्छ्यभूभागे काशी क्षेत्राधिके द्विजाः ॥ २५

पुण्यपुष्करिणी नाम तीर्थस्यादौ कृते श्रुतम् ।
पुण्याभिवृद्धिकारित्वात् त्रेतायामत्रिनामकम् ॥ २६

तस्याः श्रुतं द्वापरे तु पाराशरमिति स्मृतं ।
कलौ श्रुतं मुनेस्तीर्थं कलिकल्मष नाशनम् ॥ २७

मकुटवर्धनचोलस्तु राजा शत्रुवशङ्गतः ।
श्री वाञ्छ्येशं सुसंपूज्य पाराशर निदेशतः ॥ २८

स्नात्वा तु मुनितीर्थे वै शत्रून् निमिषतोऽजयत् ।
महाधनुः क्षत्रियस्तं राजा वीरधनोस्सुतः ॥ २९

राक्षसत्वात्सुसंपूज्य मुक्तोऽभून्मुनिपुङ्गवाः ।
वैकुण्ठे शेषपर्यङ्के श्री भूमिभ्यां युतो हरिः ॥ ३०
योगनिद्रारतो विष्णुर्निवसन्मुनि पुङ्गवाः ।
यदा देवादिभिर्वन्द्यः कृष्णोऽबुध्यत तत्क्षणात् ॥ ३१
देवोऽपि दक्षिणेनाशु भूमिमुद्वहदब्धिजाम् ।
वामेनैव करेणापि तदा कोपवशाद्रमा ॥ ३२
पक्षपातं वहस्यस्यां सपत्न्यां मय्यनादरात् ।
इत्युक्त्वा जनकावासमभ्येत्य न्यवसत्ततः ॥ ३३
विष्णुर्विरह सन्तप्तः श्री वाञ्छ्यं चिन्तयन् प्रभुः ।
आकाशवाणीवदनाच्छ्री वाञ्छ्येशं वरप्रदम् ॥ ३४
पूज्य तस्वाऽयुतं वर्षं श्री वाञ्छ्यालय पश्चिमे ।
पुनर्लब्ध्वा श्रियं विष्णुर्भक्त्या श्री वाञ्छ्यभूतले ॥ ३५
अर्चयामास देवेशं कृष्णः स्वार्चनया शिवः ।
कैलासाद्वृषमारूढौ लक्ष्मीं कृष्णेन योजयत् ॥ ३६
अत एव स्थलं चैतच्छ्रीवाञ्छ्यमिति विश्रुतम् ।
श्रीवाञ्छया हरिर्यत्र तपस्यति यतस्स्थलम् ॥ ३७
श्रीवाञ्छ्यमिति विख्यातं प्रसिद्धं मुनिपुङ्गवाः ।
शिवाज्ञया हरिस्तत्र श्रीवाञ्छ्ये निवसत्यहो ॥ ३८
नारायणाश्रमं तच्च श्रीवाञ्छ्यालय पश्चिमे ।
इन्द्रः पूज्य महादेवं श्रीवाञ्छ्ये भगलांछनः ॥ ३९
देहलग्नमहल्यायास्संगदोषं व्यसर्जयत् ।
गुरोरनुज्ञया माघे मखे मासे महेशितुः ॥ ४०
श्री वाञ्छ्येशस्य माहात्म्यं श्रुत्वा पुण्यं सुरेश्वरः ।
पूर्ववत् स्थानमखिलं कृत्वा देवालयादि च ॥ ४१

यथोक्तमखिलं भक्त्या माघे स्नात्वा रथोत्सवम् ।
गमयामास देवस्य प्रसादेन समेधितम् ।। ४२
श्री वाञ्छ्यनायकेनापि दिवं प्राप्य शचीपतिः ।
मोदते च सुरस्त्रीभिरमरैः परिवारितः ।। ४३
विकुक्षिपत्नी चारुमती गार्ग्यशापादभूद् द्विजाः ।
पुण्याख्य नलिनीस्नानात्पुरा वै राजयक्ष्मणः ।। ४४
मुक्ताऽभवत् प्रसादेन श्री वाञ्छ्येशस्य भूसुराः ।
धर्मध्वजोऽपि वैश्येन्द्रः पत्न्या श्री वाञ्छ्यभूतले ।। ४५
पुण्याख्य नलिनीतीर्थे माघस्नानं यथाविधि ।
कृत्वा संपूज्य वाञ्छ्येशं देहान्ते काञ्चनाकृतिः ।। ४६
यानमारुह्य कैलासं प्राप माघस्य वैभवात् ।
श्री वाञ्छ्ये ब्रह्मतीर्थन्तु पूर्वभागे मनोहरम् ।। ४७
आग्नेय्यां नारदाख्यं च वर्तते पुण्यदं द्विजाः ।
विश्वामित्रकृतं तीर्थं दक्षिणे चाति पावनम् ।। ४८
नैर्ऋतौ सर्वतीर्थं च भारद्वाजस्य विश्रुतम् ।
शेषतीर्थं महापुण्यं पश्चिमेऽभीष्टदायकम् ।। ४९
तीर्थं नारायणस्यापि पश्चिमे घटिकाद्वये ।
वर्तते कामदं नृणां विष्णुप्रीतिकरं शुभम् ।। ५०
वायव्ये रामतीर्थं चाप्युत्तरे भैरवं तथा ।
ऐशान्य इन्द्रतीर्थं च भाति देवालयान्तरे ।। ५१
आनन्दकूपमाख्यातं स्नातो ह्यानन्दभाग्भवेत् ।
पुण्य पुष्करिणीत्येव सर्वसौभाग्यदायिनी ।। ५२
ऐशान्युत्तरदिग्भागे तीर्थं भैरवनामकम् ।
तीर्थानामपि सर्वेषां श्रीवाञ्छ्ये दर्शनान्नृणाम् ।। ५३

कोटयो ब्रह्महत्यानां पलायन्ते मुनीश्वराः ।
कृते स्वर्णमयं स्थानं श्रीवाञ्छ्ये रजतात्मकम् ।। ५४
त्रेतायां ताम्ररूपं स्यात् द्वापरे तु द्विजोतमाः ।
कलौ तु मृण्मयं स्थानं कलिदोषाद्बभूव हि ।। ५५
श्रीवाञ्छ्यमिति यो ब्रूयात् प्रातरुत्थाय नित्यशः ।
कांक्षते तं नरश्रेष्ठं लक्ष्मीस्सर्वगुणालयम् ।। ५६
लभेच्च पुत्रसंपत्तिं श्रीवाञ्छ्येशकृपाबलात् ।
इत्यगस्त्यमुखाच्छ्रुत्वा श्रीवाञ्छ्येशस्य पावनम् ।। ५७
माहात्म्यं तत्वतस्सर्वे कुंभजस्याज्ञया स्थलम् ।
प्राप्य श्रीवाञ्छ्यभूभागं दशतीर्थे च पावने ।। ५८
स्नात्वा जले सुसंपूज्य श्रीवाञ्छ्ये मुनिपुङ्गवाः ।
श्रीवाञ्छ्येशाद्वरान् लब्ध्वा देशान् स्वान् प्रतिपेदिरे ।। ५९
श्रीवाञ्छ्येशस्य माहात्म्यं यश्शृण्वंश्च लिखन्पठन् ।
प्रपञ्चयन् श्रियं प्राप्य शिवलोकं गमिष्यति ।। ६०
इति श्री ब्रह्माण्डोपपुराणे श्री वाञ्छ्य माहात्म्ये नवमोऽध्यायः ।।

## ।। एकविंशोऽध्यायः ।।

(सांबोपपुराणतः)

(सांब सुयज्ञसंवादः)

सुयज्ञः -

सांब सर्वकलाभिज्ञ सर्वेषां हितकारक ।
त्वत्तः श्रुतान्यशेषाणि प्रायश्चित्तानि सादरम् ।। १
ब्रह्महत्यादि पापानामन्येषां च द्विजोत्तम ।
कृतत्रेताद्वापरेषु कर्तुं शक्यं महामुने ।। २

त्वयोक्तेनैव मार्गेण कलौ कर्तुं न शक्यते ।
प्राणिनामायुषोऽल्पत्वाद्बलाभावान्न साध्यते ।। ३

लघूपायेन पापानां महतां मोक्षणं भवेत् ।
तथा त्वं मुनिशार्दूल ब्रूहि सर्वं विचार्य मे ।। ४

सांबः -

साधु साधु महाप्राज्ञ सुयज्ञ ऋषिसत्तम ।
सत् प्रसंगस्त्वया प्रोक्तः सर्वेषां हितकारकः ।। ५

श्रूयतामभिधास्यामि प्राणिनां हितकाम्यया ।
लघूपायेन महतां पातकानां विमोक्षणम् ।। ६

विना कृच्छ्रादिकरणं विना भूमिप्रदक्षिणम् ।
विना च तीर्थयात्रां च विना च पतनं भृगोः ।। ७

विना यज्ञं विना दानं विना द्रव्यव्ययं तथा ।
स्नानमात्रेण महतां पातकानां विशेषतः ।। ८

प्रायश्चित्तं प्रवक्ष्यामि जनानां हितकाम्यया ।
सह्यपादोद्भवा काचिन्नदी कावेरिसंज्ञिका ।। ९

तस्यास्तु दक्षिणे तीरे योजनद्वयमात्रके ।
श्री वाञ्छ्याख्यं महत् स्थानं वर्तते कलिनाशनम् ।। १०

तस्य क्षेत्रस्य माहात्म्यम् वक्तुं वर्षशतैरपि ।
शेषेण ब्रह्मणा वापि नालमिन्द्रादिभिस्सुरैः ।। ११

ब्रह्मणः प्रलये तस्य नाशो नास्ति क्षितौ मुने ।
तस्य क्षेत्रस्य माहात्म्यं किञ्चित्संक्षिप्य वच्मि ते ।। १२

शृण्वतां सर्वपापघ्नं पुण्यदं पुरुषार्थदम् ।
यस्य काशीसमानानि क्षेत्राण्यपि महामुने ।। १३

न षोडशांशमर्हंति तत्केनैवात्र वर्ण्यते ।
यस्मिन्मृतानां जन्तूनां यातना नास्ति भैरवी ।। १४

यस्मिन्मृतानां जन्तूनां कर्णे सव्ये शिवस्स्वयम् ।
तारकप्रणवं ब्रह्म व्याचष्टे मुक्तये शिवः ।। १५
तस्य क्षेत्रस्य महिमा वर्ण्यते केन वा मुने ।
तथापि तस्य माहात्म्यलेशमात्रं वदामि ते ।। १६
शृण्वतां सर्वजन्तूनां पुण्यदं पुरुषार्थदम् ।
तत्र तीर्थवरं चास्ति श्रीवाञ्छेशस्य चोत्तरे ।। १७
तस्य तीर्थस्य बहुधा वदन्त्याख्यां सुरोत्तमाः ।
अनेकेषु पुराणेषु कालकारण भेदतः ।। १८
तस्मिन् तीर्थवरे पुण्ये भानुवारे त्विनोदये ।
ये स्नांति मनुजा नूनं ते यांति परमां गतिम् ।। १९
परदाररतानां च परद्रव्यापहारिणाम् ।
परहिंसारतानां च प्रायश्चित्तं परं स्मृतम् ।। २०
पञ्चपातकिनां चैव उपपातकिनां तथा ।
भानुवारे स्नानमिदं प्रायश्चित्तं भवत्यहो ।। २१
विशिष्य कृत्तिकाभानुवासरे मुनितीर्थके ।
पतितस्य नरस्यापि स्नानं शुद्धि प्रदं भवेत् ।। २२
परेद्युः कृत्तिकासोमवासरे स्नाति यो नरः ।
पुत्रमित्रकलत्राद्यैस्सह कामानवाप्य च ।। २३
इह भुक्त्वाखिलान्भोगानन्ते कैलासमाप्नुयात् ।
पञ्चपातकिनो भानुवारमज्जनतः क्षणात् ।। २४
शुद्धिं यान्ति मुनिश्रेष्ठ कलौ नान्यत्र निष्कृतिः ।
अस्मिन्नर्थे पुरावृत्तमितिहासं ब्रवीमि ते ।। २५
पुरा गोदावरीतीरे पञ्चाग्र्याख्यं पुरं लसत् ।
ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैस्सर्वं समाकुलम् ।। २६

महता धनधान्येन सहितं क्षामवर्जितम् ।
तस्मिन् द्विजवरः कश्चित् पारिभद्र इति श्रुतः ॥ २७
वेदाध्ययनसम्पन्नःसदाचार परायणः ।
तस्य भार्या चारुमती पातिव्रत्य परायणा ॥ २८
सर्वावयवसौन्दर्या धर्मज्ञा सत्यवादिनी ।
तस्यामुत्पादयामास पारिभद्रस्सुतं वरम् ॥ २९
स पुत्रो ववृधे ताभ्यां पितृभ्यामुपलालितः ।
विश्वभद्र इति प्रीत्या पुत्रलालननिर्वृतः ॥ ३०
पारिभद्रस्तु पुत्रस्य नाम चक्रे द्विजोत्तमाः
चिरकालात्समुद्भूतं पुत्रं नोऽशिक्षयत्पिता ॥ ३१
अशिक्षया हतो बाल इति लोकश्रुतेर्बलात् ।
वेदाध्ययनहीनोऽसौ तस्य पुत्रो विटोऽभवत् ॥ ३२
वेश्यासक्तं दुरात्मानं तस्मिन् काले पिता सुतम् ।
शिक्षया सामवचसा प्रहारेण तमात्मजम् ॥ ३३
ततः कोपसमायुक्तो विश्वभद्रोऽतिमूढधीः ।
पितरं हतवान्मौर्ख्याद्रात्रौ निद्रावशङ्गतम् ॥ ३४
तदानीमेव सा हत्या जग्राहैतं द्विजाधमम् ।
ततस्तस्माद्विनिर्गत्य देशाद्देशं वनाद्वनम् ॥ ३५
सञ्चचार महामूढः पितृहत्यातिपीडितः ।
स्थितिं न लभते क्वापि निद्रां नैति सुखं तदा ॥ ३६
एवं भूमण्डलं सर्वं भ्रमित्वा विश्वभद्रकः ।
पूर्वपुण्यविपाकेन वसिष्ठस्याश्रमं ययौ ॥ ३७
संप्रादर्शि वसिष्ठेन कृपया करुणात्मना ।
पापृच्छि च मुनीन्द्रेण को भवानिति तत्वतः ॥ ३८

वसिष्ठस्य कृपादृष्टिपातमात्रेण तस्य हि ।
संजाता सात्विकी बुद्धिर्विवेकश्चाभवत् तदा ।। ३९
धिक्कृत्य जन्म चात्मानं वसिष्ठं मुनियुङ्गवम् ।
दयालुमाह वृत्तान्तं स्वीयं तत् ब्राह्मणाधमः ।। ४०

विश्व भद्रः-

धन्यास्ते पुरुषश्रेष्ठा ये बुद्ध्या कोपमुत्थितम् ।
निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ।। ४१
क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा नरस्साधूनधिक्षिपेत् ।। ४२
वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ।। ४३
यस्समुत्पतितं कोपं क्षमयैव निरस्यति ।
यथोरगस्त्वचं जीर्णां स धंन्यः पुरुषोत्तमः ।। ४४
धिङ्मामनार्यं दुर्बद्धिं निर्लज्जं पापकृत्तमम् ।
इति धिक्कृत्य च पुनर्विशेषेण प्रसन्नधीः ।। ४५
निजवृत्तान्तमखिलं श्रावयामास तस्य हि ।
महत्या पितृहत्याऽहं पीडितो नितरां मुने ।। ४६
यदाऽहं हतवान्मौर्ख्यात्तदा जातो विचेतनः ।
तदारभ्य क्षणमपि सुखं लेभे न भूतले ।। ४७
तव दर्शनमात्रेण प्राप्तोऽस्मि नितरां सुखम् ।
त्वद्दर्शनमपुण्यानां प्रायो नैव भविष्यति ।। ४८
कस्मिंश्चिज्जन्मनि मया कृतमित्येव मे मतिः ।
नो चेत्त्वद्दर्शनं मेऽद्य कथं सङ्गच्छते मुने । ४९
तस्मात्त्वदीयदासं मां मत्वा रक्ष दयानिधे ।
यथा विमुक्तो हत्याया भविष्यामि तथा कुरु ।। ५०

महतां दर्शनं नृणां न वृथा स्यान्मनागपि ।
सहजा किल साधूनां दीनरक्षा कृपात्मनाम् ।। ५१
तस्माद्रक्ष दयासिन्धो भवन्तं शरणं गतः ।
इत्युक्तस्तेन पापेन विश्वभद्रेण तत्क्षणे ।। ५२
मतिं चक्रे वसिष्ठोऽथ महात्माऽरुन्धतीपतिः ।
वसिष्ठः-
विश्वभद्र प्रवक्ष्यामि शृणु हत्याविमोक्षणम् ।। ५३
रहस्यं नास्तिकानान्तु न प्रकाश्यं कदाचन ।
इममर्थं समुद्दिश्य पुरा वै पार्वतीपतिः ।। ५४
पृष्टः कृतयुगादिभ्यः प्रोक्तवान् परमेश्वरः ।
तदेव संप्रवक्ष्यामि सावधानमनाः शृणु ।। ५५
पुरा कैलासशिखरे नानाधातुविचित्रिते ।
नानामणिगणा कीर्णे नानारत्नोपशोभिते ।। ५६
नाना वीथी समायुक्ते नानामण्डनमण्डिते ।
तत्र सिंहासने देव्याऽधिष्ठितं त्रिपुरान्तकम् ।। ५७
ब्रह्मविष्ण्वादिभिर्देवैस्सेवितं परमर्षिभिः ।
अप्सरोभिः परिवृतं गन्धर्वैश्च निषेवितम् ।। ५८
भृंग्यादिगणपैस्सर्वैः सेवितं जयवादिभिः ।
सर्वालङ्कारसंयुक्तं सर्वाभीष्टप्रदं सदा ।। ५९
सांबं चन्द्रकलाचूडं नेमुः कृतयुगादयः ।
नत्वा प्राञ्जलयो भूत्वा ह्यब्रुवन् परमेश्वरम् ।। ६०
स्वामिन्सर्वजगन्नाथ सर्वाभीष्टप्रदायक ।
त्वद्दर्शनात्कृतार्थाः स्मः कृपया रक्ष रक्ष नः ।। ६१
स्वामिन् कृतयुगादीनि युगानि वयमागताः ।
शरणं त्वां प्रपन्नाः स्मः शरणागतवत्सल ।। ६२

स्वामिन्पुरा चतुर्णान्तु युगानां कालनिर्णयः ।
पृथक्पृथत्त्वयाऽकारि यथास्माभिरनुष्ठितः ॥ ६३
कृतत्रेताद्वापरेषु प्राणिनो धर्म तत्पराः ।
त्वयाऽधारि जगत्क्षोण्या विधातृजनकेन वै ॥ ६४
इदानीमथ ते सर्वे जनाः पापानि कुर्वते ।
ब्रह्मघ्नाश्च सुरापाश्च स्तेयिनो गुरुतल्पगाः ॥ ६५
तत्संसर्गाच्च जायन्ते प्राणिनोऽथ महाप्रभो ।
अन्यानि चोपपापानि सन्ति सर्वाणि कुर्वते ॥ ६६
तेषां भरेण पृथिवी चलतेऽतितरां विभो ।
भवता कल्पितं कालं कलिं निर्वोढुमक्षमा ॥ ६७
धर्मप्रवादमात्रत्वाद्युगे कलिविशेषतः ।
प्राणिनामायुषोऽल्पत्वात् प्रायश्चित्तस्य दुर्घटात् ॥ ६८
प्राणिनामुपकाराय कलिभूम्यो स्सुखाय च ।
ब्रह्महत्यादि पापानां प्रायश्चित्तिर्यथा भवेत् ॥ ६९
लघुमार्गेण विश्वात्मन् तथा नो ब्रूहि शङ्कर ।
इति तैः प्रार्थितः शंभुर्विश्वरक्षाधुरंधरः ॥ ७०
प्राह प्राण्युपकाराय युगानां प्रीतये विभुः ।
अस्मिन् भवन्तः शृण्वन्तु वच्मि लोकोपकारतः ॥ ७१
प्रायश्चित्तं स्नानमात्रादल्पानां महतामपि ।
सह्यजादक्षिणे तीरे योजनद्वयमात्रके ॥ ७२
*तेजिनीवनदेशस्य दक्षिणे घटिकात्रये ।
श्री वाञ्छ्याख्यं महास्थानं भुक्तिमुक्तिफलप्रदम् ॥ ७३
तस्मिंस्तीर्थवरे पुण्ये मुनिनाम्ना कलौ युगे ।
यस्स्नाति सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ७४

★ திருவீழிமழலை

आदिरूपा च या शक्तिर्मदीया विश्वपावनी ।
मया संप्रेषिता तस्मिन्वर्तते वच्मि कारणम् ।। ७५
पश्चादिदानीं तत्तीर्थे कार्तिके भानुवासरे ।
प्रथमे ब्रह्महा शुद्धिमाप्नोति स्नानमात्रतः ।। ७६
मल्लिङ्गदर्शनात्सद्यः सर्वान् कामानवाप्य च ।
इह भुक्त्वाऽखिलान् भोगानन्ते कैलासमाप्नुयात् ।। ७७
सोमवारे विशेषेण स्नात्वा मल्लिङ्गपूजनम् ।
करोति श्रद्धया भक्त्या मम सालोक्यमश्नुते ।। ७८
देहान्ते मम लोके तु स्थित्वा मुक्तो भवेद्ध्रुवम् ।
द्वितीये कार्तिके भानुवासरे स्नाति यो नरः ।। ७९
सुरापानकृतात्पापात् मुच्यते नात्र संशयः ।
द्वितीये सोमवारे च मम पूजां करोति यः ।। ८०
मम सारूप्यमाप्नोति नात्र कार्या विचारणा ।
तृतीये भानुवारे च यःस्नाति मनुजाधमः ।। ८१
स्वर्णस्तेयकृतात्पापान्मुच्यते न विचारणा ।
तार्तीयके सोमवारे स्नात्वा पूजां करोति यः ।। ८२
मम सायुज्यमाप्नोति नात्र कार्या विचारणा ।
तुरीये कार्ति के भानुवासरे स्नाति यो नरः ।। ८३
गुरुस्त्रीगमनात्पापान्मुच्यते नात्र संशयः ।
तुरीये सोमवारेऽत्र स्नात्वा मां पूजयेत्तु यः ।। ८४
मम सायुज्यमाप्नोति सत्यमेव वदाम्यहम् ।
पञ्चमे कार्तिके भानुवासरे स्नाति यो नरः ।। ८५
संसर्गपातकान्मुक्तः प्राप्नोति परमां गतिम् ।
सोमवारे पञ्चमे च स्नात्वा पूजां करोति यः ।। ८६

आप्नोति मत् प्रसादेन पुरुषार्थचतुष्टयम् ।
तस्मिन् श्री वाञ्छ्य भूभागे मदायुधविनिर्मिते ।। ८७

पुण्यपुष्करिणीनाम्नि तीर्थे त्रैलोक्य विश्रुते ।
अनेकैः कारर्णैयुक्ते ह्यनेकाख्यानसंयुते ।। ८८

प्राणिनस्तु प्रकुर्वन्तस्स्नानं पापापनुत्तये।
भानुवारेषु चैतेषु प्रातस्स्नात्वाऽरुणोदये ।। ८९

मल्लिङ्ग दर्शनं कृत्वा मच्छक्तिं चावलोक्य च ।
यथाशक्ति च दानानि कृत्वा मत्सन्निधौ मुदा ।। ९०

यथाशक्ति ब्राह्मणेभ्योऽन्नं दत्वा सदक्षिणम् ।
कृत्वा च मम गाणिक्यं मत् प्रीत्यै श्रद्धया युतः ।। ९१

तस्य तुष्टिं प्रदास्येऽहं सत्यं सत्यं वदाम्यहम् ।
एतज्ज्ञात्वा तु मनुजास्स्नात्वा मुच्यन्तु पातकैः ।। ९२

एवमुक्त्वा महादेवः प्रायश्चित्तमयत्नतः ।
कलिभूम्योस्सुखार्थाय युगानां प्रीतये विभुः ।। ९३

अन्तर्धिमगमत्तत्र युगानां पश्यतां शिवः ।
युगानि तानि हृष्टानि स्वस्थानं संप्रपेदिरे ।। ९४

तदाप्रभृति सर्वेऽपि प्राणिनः पापसंयुताः ।
स्नात्वा तु कार्तिके भानुवासरे मुनितीर्थके ।। ९५

ब्रह्महत्यादि पापेभ्यो मुच्यन्ते सर्वदा जनाः ।
वसिष्ठः-
त्वयाऽपि तत्र गन्तव्यं ब्रह्महत्याविमुक्तये ।। ९६

तत्र स्नात्वा शुचिर्भूत्वा कार्तिके भानुवासरे ।
पश्चाङ्गेन पुनस्स्नात्वा विमुक्तो भव हत्यया ।। ९७

एवमुक्त्वा वसिष्ठस्तु स्वमाश्रममथो गतः ।
ततो निर्गत्य सहसा श्री वाञ्छयं पापमुक्तये ।। ९८

आगते कार्तिके भानुवासरे विश्वभद्रकः ।
स्नात्वा स्वपितृहत्याया विमुक्तो विश्वभद्रकः ॥ ९९
ब्रह्महा पितृहा मातृगन्ता वा गुरुतल्पगः ।
स्वर्णस्तेयी सुरापी च तत्संसर्गी च पापकृत् ॥ १००
कार्तिके भानुवारेऽत्र स्नात्वा मुक्तिमवाप्नुयुः ।
सांबः-
इदं परममाख्यानं ब्रह्महत्याविमोक्षणम् ॥ १०१
यः पठेच्छृणुया द्वापि महापापैः प्रमुच्यते ।
ब्रह्महत्यादिपापघ्नं भुक्तिमुक्तिफलप्रदम् ॥ १०२
शृणोति भक्त्या य इदं भुक्तिं मुक्तिं च विन्दति ॥ १०३

इति श्री सांबोपपुराणे श्री वाञ्छ्य माहात्म्ये सप्तमोऽध्यायः

## ॥ द्वाविंशोऽध्यायः ॥

सुयज्ञः-
सम्यगुक्तं त्वया ब्रह्मन् ब्रह्महत्याविमोक्षणम् ।
विचित्रं विश्वभद्रस्य चरितं तन्मया श्रुतम् ॥ १
द्वितीयकृत्तिकाभानुवासरे स्नानमात्रतः ।
सुरापानकृतात्पापान्मुक्तो भवति मानवः ॥ २
इत्युक्तं भवता पूर्वं करुणावरुणालय ।
को वा स्नात्वा विमुक्तोऽभूच्छ्रीवाञ्छ्ये मुनितीर्थके ॥ ३
वर्तते तस्य शुश्रूषा वद सम्यक्क्रमाधुना ॥
सांबः-
अत्रार्थे कथयिष्यामि इतिहासं तवाधुना ॥ ४

द्वितीयकृत्तिकाभानुवासरस्य महामते ।
माहात्म्यं सर्व जन्तूनां श्रवणात्सर्वकामदम् ।। ५
आयुरारोग्यदं नृणामपमृत्युभयापहम् ।
मन्दाकिन्यास्तटे रम्ये पुरा मृत्युञ्जयाभिधम् ।। ६
ब्रह्मक्षत्रियविट्शूद्रैरन्यैरपि समाकुलम् ।
तत्र कश्चिद्द्विजवरो बाष्कलाख्यो महामुनिः ।। ७
तेजसाऽदित्य संकाशो महात्मा विजितेन्द्रियः ।
श्रुतिस्मृति पुराणज्ञःस्वाध्यायाध्ययने रतः ।। ८
तस्य भार्या महासाध्वी सर्वावयवसुन्दरी ।
नाम्ना तु भागनाथायामात्मजाननलोपमान् ।। ९
उत्पादयामास वरान् पञ्च बाष्कलसंज्ञकः ।
द्युमणिश्च मणिश्चैव चिन्मणिस्तरणिस्तथा ।। १०
मायानाशमणिश्चेति नाम चक्रे क्रमेण हि ।
क्रमाद्ववृधिरे पुत्राः सर्वसंस्कार संस्कृताः ।। ११
तेषां ज्येष्ठो महाबुद्धिर्द्युमणिः सूर्यसन्निभः ।
कुर्वन्गुरुकुलावासमाचरन् भैक्ष्य मादरात् ।। १२
गुरुस्तस्य तु तुष्टोऽभूद्वेदानध्यापयत्तदा ।
अध्यैष्ट सकलान्वेदान्वेदाङ्गानि तथैव च ।। १३
मीमांसादीनि शास्त्राणि धर्मशास्त्राणि कृत्स्नशः ।
अष्टादशपुराणानि सेतिहासानि सर्वशः ।। १४
मातरं पितरं चैव गुरुं चाप्यनुवर्तयन् ।
शिवं संपूजयन्नित्यं त्रिकालं भक्ति पूर्वकम् ।। १५
शिव प्रसादमाकांक्षन् तस्मिन्नेकमनास्सदा ।
सतामाचार निरतो भूत्वा कालं सदा नयन् ।। १६

तस्यैवं वर्तमानस्य द्युमणेस्तु महामतेः ।
कदाचित् बुद्धिरुत्पन्ना तस्य तीर्थाटनं प्रति ।। १७
पितृभ्यां समनुज्ञातो निर्गतस्स्वगृहात्तदा ।
तीर्थात्तीर्थान्तरं गत्वा सञ्चचार महीमिमाम् ।। १८
तस्मिन् काले दैवयोगाच्छरीरे द्युमणेर्मुने ।
ज्वरबाधाऽतिमहती जाता देशान्तरे मुने ।। १९
तदानीं तत्र सुमहद्दृष्टवान् स्थानमुत्तमम् ।
*ब्रह्मेश्वरमिति ख्यातं ब्रह्मणा निर्मितं पुरा ।। २०
तत्र गत्वा तृषार्तस्सन्निशीथे ज्वरपीडितः ।
वारस्त्री गृहमभ्येत्य ज्वरितो ब्राह्मणोत्तमः ।। २१
असकृत् प्रार्थयामास जलं मे दीयतामिति ।
प्रार्थिता सा सकृत्तेन चेटीमाहूय शीघ्रतः ।। २२
देयमस्मै जलं चेटीत्यवादीद्गणिका ततः ।
चेटिका मद्यमाहृत्य जलभ्रान्त्या ददौ निशि ।। २३
तत् गृहीत्वा पपौ मद्यमवशो रोगपीडितः ।
तेन पीतेन मद्येन ज्वरशांतिः क्षणादभूत् ।। २४
क्षणेन स्वस्थदेहोऽसौ गन्धं ज्ञात्वा विमृश्य च ।
पीतमद्य मया मद्यमवशेन महा [illegible]शि ।। २५
अहो नष्टमहो नष्टमहो जन्म निरर्थकम् ।
यत्कृत्वा शुद्धिमेष्यामि तत्कर्तव्यं मयाऽधुना ।। २६
इति निद्रां विना रात्रि शेषं नीत्वा क्रुधा ज्वलन् ।
वेश्यामाहूय स प्रातर्भर्त्सयामास भूसुरः ।। २७
सा वेश्यापि समाहूय चेटीं संप्राहरत्तदा ।
प्रहारैः पीडिता चेटी प्राह दुःखसमाकुला ।। २८

---
*சீர்காழி

रात्रौ निद्रावशात्तस्मै मयाऽदायि क्षमस्व तत् ।
इत्युक्त्वा चेटिका तस्याः पादयोः पतिता भृशम् ।। २९
तच्छ्रुत्वा चेटिकावाक्यं विधिर्हि बलवानिति ।
मत्वा स्वात्मानमुद्दिश्य धिक्कृत्वा तु मुहुर्मुहुः ।। ३०
मर्तुं तप्तसुरां पीत्वा मतिं चक्रे द्विजोत्तमः ।
अथ स्नात्वाऽग्निमुज्ज्वाल्य तापयित्वाऽग्निना सुराम् ।। ३१
दृष्ट्वा भीतस्स्वयं तूच्चैः रुरोद करुणस्वनम् ।
हे विधे लिखितोऽस्म्येवं ललाटे भवताऽधुना ।। ३२
अग्नितप्तां तु मदिरामहं पास्यामि हा इति ।
इति प्रलप्य बहुधा द्युमणिर्भयविह्वलः ।। ३३
चिन्तयामास मतिमान् किं कर्तव्यमितः परं ।
स्मृतवान् पितृवाक्यं तद्द्युमणिः परितापवान् ।। ३४
महत्यामापदि सति स्मर्तव्यो भगवान् शिवः ।
इत्युक्तोऽहं पुराऽस्माकं जनकेन महात्मना ।। ३५
तस्मात् स्मृत्वा महादेवं अंबिकापतिमव्ययम् ।
स्तुत्वा तु विविधैस्स्तोत्रैः प्रीणयामि जगत्पतिम् ।। ३६
प्रीते जगद्गुरौ तस्मिन् तप्तामग्निसमां सुराम् ।
पास्यामि शंभोः कृपया सा सुराऽप्यमृतं भवेत् ।। ३७
इति निश्चित्य मनसा तं स्तोतुमुपचक्रमे ।।
नमस्ते विश्वनाथाय नमो विश्वंभराय च ।। ३८
नमस्ते करुणासिन्धो नमस्ते भक्त वत्सल ।
नमस्त्रैलोक्य नाथाय पार्वतीवल्लभाय ते ।। ३९
विश्वेशाय नमस्तुभ्यं विरूपाक्षाय शंभवे ।
नमोऽस्तु ते पार्वतिवल्लभाय नमोऽस्तु ते पद्मजपूजिताय ।। ४०

नमोऽस्तु ते श्रीपतिवल्लभाय नमोऽस्तु ते पाप निकृन्तनाय ।
भक्तानुरक्षाय भयापहाय भक्तार्तिहंत्रे भवरोगहंत्रे ।। ४१
सत्याय नित्याय सदाशिवाय श्री पार्वतीशाय नमःशिवाय ।
इति स्तुत्वा महादेवं पार्वतीवल्लभं प्रभुम् ।। ४२
पातुं प्रचक्रमे यावत्तावत् प्रादुरभूच्छिवः ।
दृष्ट्वा तत्र महादेवं पार्वतीपतिमव्ययम् ।। ४३
द्युमणिः पादयोस्तस्य प्रणनाम मुहुर्मुहुः ।
नमन्तं तं महादेवो द्युमणिं करुणानिधिः ।। ४४
प्राह गंभीरया वाचा कृपासिंधुस्त्रिलोचनः ।
मा भैषीर्द्युमणे वच्मि प्रायश्चित्तमयत्नतः ।। ४५
यत्कृत्वा तु भवेन्मुक्तिः पानदोषात्तव क्षणात् ।
भूमेराग्नेयदिग्भागे सह्यजादक्षिणे तटे ।। ४६
कुंभघोणस्य चाग्नेये सार्धयोजनमात्रके ।
श्रीवाञ्छ्याख्यं महत् स्थानं वर्तते भुक्ति मुक्तिदम् ।। ४७
तत्र गत्वा मम स्थाने कार्तिके भानु वासरे ।
द्वितीयके कुरु स्नानं प्रायश्चित्तं भवेत्तव ।। ४८
तत्रास्ति तीर्थं सुमहन्मदायुध विनिर्मितम् ।
तस्य तीर्थस्य बहुधा वदन्त्याख्यां तु कारणैः ।। ४९
कारणेन कलौ देवा मुनितीर्थं वदंति तत् ।
तत्र स्नात्वा कलिजिति कृत्वा मल्लिङ्गदर्शनम् ।। ५०
सुशुद्धो भव शीघ्रं त्वं मदिरास्वादजाद्भयात् ।
इत्युक्त्वाऽन्तरधात्तं वै पार्वतीप्राणवल्लभः ।। ५१

सांबः-

इत्युक्तः परमेशेन द्युमणिर्ब्राह्मणोत्तमः ।
सन्तोषं परमं लेभे निःस्वः प्राप्य यथा धनम् ।। ५२

तदानीमेव निर्गत्य भूकैलासाभिधं स्थलम् ।
गत्वा स्नात्वा महेशस्य दर्शनात्पानदोषतः ॥ ५३
विमुक्तस्सर्वपापेभ्यः स्वस्थानं प्राप भो मुने ।
येनापायि सुरा मोहाद्गन्तव्यं तत्र तेन वै ॥ ५४
स्नातव्यं गुप्तगङ्गायां दातव्यं काञ्चनादिकम् ।
भोजितव्यं काञ्चनैः स्वैः पानदोषापनुत्तये ॥ ५५
एवं यः कुरुते भक्त्या पश्चात्तापसमन्वितः ।
तस्य शुद्धिर्भवत्येव शंभोर्वाक्यान्न संशयः ॥ ५६
संदिह्यतेऽस्मिन्नर्थे यैरनुमेयैर्विपश्चिता ।
तेषामुत्पत्तिसाङ्कर्यमन्यथा न वदेत्तथा ॥ ५७
यस्त्वर्थवादं तत् ब्रूते पुराणं मुनिपुंगव ।
तस्योत्पत्तौ तु साङ्कर्यं विज्ञेयं हि विपश्चिता ॥ ५८
यः प्रमाणं न कुरुते पुराणमिममन्यथा ।
तस्योत्पत्तौ तु साङ्कर्यं विज्ञेयं हि विपश्चिता ॥ ५९
तस्माच्छ्रोतव्यमनिशमास्तिकैरेव नान्यथा ।
नास्तिकाय न वक्तव्यं कृतघ्नाय शठाय च ॥ ६०
चार्वाकिने न वक्तव्यं नैव पाषण्डिने मुने ।
वक्तव्यं श्रद्दधानाय साधवे तु दयालवे ॥ ६१
असूयेर्ष्याविहीनाय वक्तव्यं धर्ममिच्छता ।
इदं परममाख्यानं ये शृण्वंति पठन्ति च ॥ ६२
ते सर्वदोषान्मुच्यन्ते नात्र कार्या विचारणा ॥ ६३

इति श्री सांबोपपुराणे श्री वाञ्छय माहात्म्ये अष्टमोऽध्यायः



## ।। त्रयोविंशोऽध्यायः ।।

सुयज्ञः -

गुप्तगङ्गेति यन्नाम प्रत्यपादि त्वया पुरा ।
स्नातव्यं गुप्तगङ्गायां दातव्यं मानवैरिति ।। १

तन्नाम मुनितीर्थस्य ज्ञातव्यं तस्य वा मया ।
असंशयं यथाऽज्ञायि मया बोधय मां तथा ।। २

सांबः -

तथैव त्वां बोधयामि शृणुष्वैकमना भवान् ।
प्रथितं त्रिषु लोकेषु यत्तीर्थं मुनिपूर्वकम् ।। ३

वर्तते यत्र तस्यैव गुप्तगङ्गेति नाम भोः ।
संजातं हेतुना केन गुप्तगङ्गाभिधा वरा ।। ४

तस्य तत्कारणं प्रायो न प्रकाश्यं हि कस्यचित् ।
तथापि तव वक्ष्यामि शिष्यत्वात्तव सन्मते ।। ५

नावाच्यमस्ति शिष्यस्य विनीतस्य गुरोर्मुने ।
नावाच्यमस्ति पुत्रस्य स्वधर्मनिरतस्य च ।। ६

द्वापरान्ते पुरा गङ्गा कैलासं पर्वतोत्तमम् ।
गत्वा तत्र समासीनं देव्या सह वरासने ।। ७

दृष्ट्वा प्रणम्य बहुधा प्रार्थयामास हृद्गतम् ।
स्वामिन् सर्वजगन्नाथ भक्तानामिष्टदायक ।। ८

मनोरथं ममापूर्य रक्ष मां शरणागतम् ।। ९
युगेषु क्षत्रिया वैश्याः शूद्राः पापानि कुर्वते ।
वर्णाश्रम विहीनाश्च परदाराभिमर्शकाः ।। १०

परद्रव्यापहर्तारो भवन्ति ह कलौ युगे ।
परहिंसारतास्सर्वे परान्ननिरता भृशम् ।। ११

परोपकाररहिता भवन्ति हि कलौ युगे ।
सन्ध्यास्नानविहीनाश्च जपहीना विशेषतः ।। १२
देवताराधनाहीना भवन्ति हि कलौ युगे ।
औपासनविहीनाश्च स्वाध्यायविमुखास्तथा ।। १३
पञ्चयज्ञविहीनाश्च भवन्ति हि नराः कलौ ।
पितृद्रोहपराः पुत्रा मातृद्रोहरता भृशम् ।। १४
गुरुद्रोहरतास्सर्वे भवन्ति हि नराः कलौ ।
कन्याविक्रयिणः केचिद्रसविक्रयिणः परे ।। १५
वेदविक्रयिणश्चान्ये भवन्ति हि नराः कलौ ।
शूद्रान्ननिरता विप्राः शूद्रसेवापरायणाः ।। १६
शूद्रप्रेषण कर्तारो भवन्ति हि कलौ युगे ।
वैदिकाचारविमुखास्तांत्रिकाचार तत्पराः ।। १७
भस्मरुद्राक्षविमुखा भवन्ति हि कलौ युगे ।
दानहीनाः पुण्यहीना यागहीना विशेषतः ।। १८
आतिथ्यहीना नितरां भवन्ति हि कलौ जनाः ।
शूद्रेभ्यः प्रतिगृह्णंति पतितेभ्यस्तथैव च ।। १९
महादानान्यपि वृथा प्रतिगृह्णन्ति भूरिशः ।
मातृश्राद्धं पितृश्राद्धं दर्शादिश्राद्धमेव च ।। २०
महालयाष्टकाहीना भवन्ति हि कलौ जनाः ।
धर्मशास्त्र पुराणानां प्रवक्तारं द्विषंति च ।। २१
परापवादपैशुन्य परद्रोहरता भृशम् ।
परस्वहरणे सर्वे यत्नवन्तो भवन्ति हि ।। २२
बहुनोक्तेन किं देव प्राणिनः कृतपातकाः ।
भविष्यन्ति कलौ स्वामिन् कृत्वा पापानि भूरिशः ।। २३

मयि सन्त्यज्य पापानि स्नात्वा शुद्धा भवन्ति हि ।
मयि त्यक्तानि पापानि सोढुं शक्तिर्न मे प्रभो ।। २४
प्राणिनां पापभारेण खिन्नाऽस्मि सुतरां प्रभो ।
महापापविशुद्धौ तु तीर्थं यद्यस्ति चेन्महत् ।। २५
मत्पापपरिशुद्ध्यर्थं वदभूम्यां महाप्रभो ।
इत्युक्तो गङ्गया गङ्गाधरः पद्मज वन्दितः ।। २६
प्राह गंभीरया वाचा गङ्गां प्रति हरस्त्वहो ।।

ईश्वरः-

गङ्गे मम प्रीतिपात्रं त्वत्तो नास्ति यतस्ततः ।
प्रब्रवीमि तव प्रीत्यै रहस्यमपि मत्प्रिये ।। २७
भूलोके पुण्यभूभागे जंबूद्वीपे जगन्मये ।
कावेर्या दक्षिणे तीरे स्थानमस्ति मम प्रियं ।। २८
स्थानानामुत्तमं स्थानं श्री वाञ्छ्यमिति संज्ञितम् ।
श्री भूकैलासमिति च वदन्त्याख्यामनेकधा ।। २९
तस्य स्थानस्य माहात्म्यं मया वक्तुं न शक्यते ।
तथ्यं यदुच्यते सद्भिः काश्याः शतगुणोत्तरम् ।। ३०
तत्तूपलक्षणमिति विद्धि गङ्गे मम प्रिये ।
तस्य ज्ञात्वैव माहात्म्यं मयाप्यंबिकया सह ।। ३१
स्थीयते मम पुत्राभ्यां ब्रह्मविष्ण्वादिभिस्सह ।
मत्सन्निधानात्तत्रत्यजनानां नास्ति दुर्लभम् ।। ३२
तस्मिन्निवसतां नृणां मुक्तिः करतले स्थिता ।
तस्मिन्मृतानां जन्तूनां यातना नास्ति भैरवी ।। ३३
भैरवस्याधिकारोऽपि मया नादायि तत्र वै ।
प्राणिनां कृतपापानां देशान्तरनिवासिनाम् ।। ३४

पापानि विलयं यान्ति भूकैलास प्रवेशनात् ।
मयाऽपि चरमे काले प्राणिनां प्राणसंशये ।। ३५
दक्षिणे श्रवणे मुक्त्यै तारकन्तूपदिश्यते ।
काश्यां पापलयाभावाद्भैरवस्याधिकारिता ।
नास्ति तत्राधिकर्तृत्वं सर्वथाऽप्यस्ति यद्यपि ।। ३७
अत एव सुखासीनो मामुपास्यत्यविभ्रमः ।
तत्स्थानसदृशं भूमौ स्थानं वा विद्यते क्वचित् ।। ३८
ममाविमुक्तात्कैलासात् प्रीतिदं कमलालयात् ।
तस्मिन्वसामि श्रीवाञ्छ्ये वाञ्छ्यनायिकया सह ।। ३९
वाञ्छितार्थप्रदातृत्वात् स्थानं दृष्ट्वा नृणां भुवि ।
वाञ्छ्यनाथेति मां प्राहुर्देवा विष्णुपुरोगमाः ।। ४०
तत्र मद्वामभागे यन्मयोत्पादि पुराऽनघे ।
तीर्थं तस्मिन्मया पश्चात् प्रस्थायि प्राणनायिके ।। ४१
षट्षष्टिकोटितीर्थानि तत्र सन्ति महामते ।
तत्र त्वं सहसा गत्वा मच्छूलेन विनिर्मिते ।। ४२
प्राणिभिर्न्यस्तपापेभ्यः स्नात्वा पूता भव क्षणात् ।
ममाज्ञया त्वं तत्तीर्थे तीर्थरूपाऽनिशं वस ।। ४३
यस्मात्त्वं पापवहनभयाद्गच्छसि तत्र वै ।
तस्मात्तत्र स्थितां त्वां तु न जानंत्वघिनः कलौ ।। ४४
शतेषु च सहस्रेषु कश्चिज्जानातु मानवः ।
काश्यां केवलगङ्गा त्वं गुप्तगङ्गा तु तत्र वै ।। ४५
नाम दत्तं तव प्रीत्या मया गङ्गे मनोरमे ।
गुप्त गङ्गेति यन्नाम यत्र कुत्र स्थिता जनाः ।। ४६
गृणन्ति तेषां पापं तु सद्यः संक्षयमेष्यति
ये स्नात्वा गुप्तगङ्गायां श्री वाञ्छ्ये त्वयि मानवाः ।। ४७

काश्यास्सहस्रगुणितं फलं यान्तु ममाज्ञया ।
त्वयि स्नात्वा मम प्रीत्यै दत्वा दानानि शक्तितः ॥ ४८

ये मल्लिङ्गं दर्शयन्ति ते मुक्तास्स्युर्न संशयः ।
ये गुप्तगङ्गानाम्न्यान्तु स्नात्वा सन्तर्प्य वारिणा ॥ ४९

पितॄन् द्विजानामन्नेन तोषयन्ति कलौ नराः ।
काश्याधिक्यं फलं तेषां सहस्रगुणितं भवेत् ॥ ५०

भवत्या नित्यवासेन क्षेत्रं श्री वाञ्छ्यसंज्ञकम् ।
काश्यास्सहस्र गुणतो ह्यधिकं भवतु प्रिये ॥ ५१

इतः पूर्वं शतगुणं काश्याधिक्यमतः परम् ।
सहस्रगुणसंयुक्तं भवेत्त्वद्योगतः प्रिये ॥ ५२

प्रायश्चित्तविहीनानां पापानां महतामपि ।
प्रायश्चित्तं भवेत् स्नानमात्रतस्तव योगतः ॥ ५३

इत्युक्त्वा परमेशानः शुद्धान्तं प्राविशत्ततः ।
ततो गङ्गा स्वकीयेषु सहस्रांशेषु सा तदा ॥ ५४

अंशमेकं स्थापयित्वा काश्यां विश्वेशसन्निधौ ।
पावनार्थन्तु जगतां प्रीत्यर्थं परमेशितुः ॥ ५५

अंशैरेकोनसाहस्रैर्गङ्गा श्री वाञ्छ्यभूतलम् ।
गत्वा श्री मुनितीर्थाख्यं तीर्थं संप्राविशन्मुने ॥ ५६

यदा प्रविष्टा सा गङ्गा सहैकोनसहस्रकैः ।
अंशैस्तीर्थं प्रविश्याथ पुनात्येव जगत्त्रयम् ॥ ५७

तज्जले स्नातुकामाश्च याचन्ते मर्त्यतां सुराः ।
कदा भूतलमभ्येत्य गुप्तगङ्गानिमज्जनम् ॥ ५८

कुर्मो वयं चेति सुरैः प्रार्थ्यमाना मुहुर्मुहुः ।
कथितं भवते गुप्तगङ्गायास्तु निरूपणम् ॥ ५९

इतः परं ते प्रष्टव्यमस्ति चेत्पृच्छ वच्मि ते ।
इत्येतत्परमाख्यानं ये शृण्वन्ति पंठति च ॥ ६०
तरन्त्यपारसंसारसागरं प्राणिनो ध्रुवम् ।
इदं रहस्यं भवता गोपनीयं प्रयत्नतः ॥ ६१
प्रभावो गुप्तगङ्गाया नास्तिकाय विशेषतः ॥

इति श्री सांबोपपुराणे श्री वाञ्छच माहात्म्ये नवमोऽध्यायः ॥

## ॥ चतुर्विंशोऽध्यायः ॥

सुयज्ञः -

साधु सांब त्वया योगिन् सम्यग्बोधितवानहम् ।
इदानीमपि तृप्तोऽहं पृच्छामि त्वां महामुने ॥ १
मुनितीर्थे तु गङ्गायाः कश्चित् यःस्तेयदोषतः ।
स्नानमात्रेण यद्यस्ति मुक्तस्तन्मे वद प्रभो ॥ २
स्तेयी प्रकीर्णकेशो यो मुसलं च प्रसारयन् ।
उक्त्वा स्वं कर्म राज्ञेऽथ राज्ञा स मुसलाहतः ॥ ३
स्तेयदोषात् प्रमुच्येत नान्यथा तस्य निष्कृतिः ।
इत्यश्रावि मया ब्रह्मन् प्रायश्चित्तविधौ प्रभो ॥ ४
विना प्राणान्तिकप्रायश्चित्तं स्नानेन निष्कृतिः ।
यद्यस्ति मम सर्वज्ञ कृपया वद सांप्रतम् ॥ ५
एवमुक्तस्सुयज्ञेन सांबः संसारमोचकः ।
कथयामास धर्मात्मा सुयज्ञाय महात्मने ॥ ६

सांबः -

त्वामहं श्रावयिष्यामि ह्यस्मिन्नर्थे पुरातनम् ।
इतिहासं महापुण्यं श्रोतॄणामघ नाशनम् ॥ ७

वङ्गदेशे महान्कश्चिद्ग्रामो मरतकाभिधः ।
तत्र कश्चित् द्विजवरः कहोलाख्यः प्रसन्नधीः ॥ ८
चतुर्णामपि वेदानां सांगानां पारगो महान् ।
श्रौतस्मार्तकलाभिज्ञः सर्वशास्त्रार्थतत्ववित् ॥ ९
धर्मशास्त्रपुराणानि ह्यागमान्यखिलान्यपि ।
विदित्वा स्वाश्रमाचारं सम्यक्कृत्वा विधानतः ॥ १०
स्वधर्मनिरतो नित्यं स्वाध्यायाध्ययने रतः ।
अग्निहोत्ररतो नित्यं पञ्चयज्ञपरायणः ॥ ११
अतिथिप्रीतिकृन्नित्यं प्रतिग्रहविवर्जितः ।
एवं गृहाश्रमी भूत्वा पत्न्या साकं स्थितस्सुखम् ॥ १२
कर्तुं माध्यंदिनं स्नानं नद्यां चैव कहोलकः ।
गतवान्मार्गमध्ये तु कस्यचिद्गृहभित्तिषु ॥ १३
वर्षायोगान्निधिं मार्गे प्रादर्शि ब्राह्मणेन वै ॥ १४
तद्गृहीत्वा नदीं गत्वा शिवेनादायि मे धनम् ।
इति मत्वाऽऽप सन्तोषं निधिं लब्ध्वेव निर्धनः ॥ १५
स्नात्वा माध्याह्निकं कृत्यं कृत्वा वै गेहमागतः ।
अन्नदानं स्वर्णदानं वस्त्रदानं तथैव च ॥ १६
गोदानं भूमिदानं च तिलदानं तथैव च ।
कन्यादानादिदानानि दत्वा भक्त्या विशेषतः ॥ १७
निरन्तराग्नि पूजां च कृत्वा पूजां शिवस्य च ।
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा शंभुं सभक्तिकम् ॥ १८
शिवप्रसादः सुमहान् ममैवेति महामतिः ।
मेने कृतार्थमात्मानं कहोलाख्यः परां मुदम् ॥ १९
तस्यैवं वर्तमानस्य कदाचिन्मंदिरोत्तमे ।
दुर्वासास्सह शिष्यैश्च समागान्मध्यगे रवौ ॥ २०

कहोलस्सहसोत्थाय दृष्ट्वा दुर्वाससं मुनिम् ।
नत्वा स्वासनपाद्यार्घ्यैः पूजयामास सादरम् ।। २१
आसने सूपविष्टस्तं दृष्ट्वा दुर्वाससं मुनिम् ।
उवाच प्रांजलिर्भूत्वा सशिष्यं विनयेन तु ।। २२
स्वागतं ते महाभाग सह शिष्यैर्महात्मभिः ।
दिष्ट्या प्राप्तोऽसि मद्गेहं कृतार्थोऽस्मि महामुने ।। २३
अद्य मे सफलं जन्म ह्यद्य मे सफलं तपः ।
कृतार्थं मम गार्हस्थ्यं सफलं जीवितं च मे ।। २४
अद्य मद्वंशजास्सर्वे पितरः कृतकृत्यताम् ।
प्राप्ता मदीयभवनं पूतमद्य त्वदीक्षणात् ।। २५
भवत्पादाब्जरजसा पाविताःस्स्म वयं मुने ।
पाविता गृहिणी मेऽद्य युष्मत्पादाब्जसेवया ।। २६
कृतार्थास्स्म कृतार्थास्स्म भवतां दर्शनाद्वयम् ।
आतिथ्यं कर्तुमिच्छामि सशिष्यस्य महामुने ।। २७
अङ्गीकर्तव्यमातिथ्यं त्वद्दासस्य गृहे मम ।
एवमुक्तस्स दुर्वासाः कहोलेन द्विजातिना ।। २८
कहोलचरितं सर्वं ज्ञानदृष्ट्या विचारयत् ।
ज्ञात्वा सर्वं प्रहस्यै नं कहोलं प्रत्युवाच सः ।। २९
यस्मात्कहोल ते चौर्यमासीदन्यधनस्य हि ।
स्वर्णस्तेयी भवान् तस्मात्कथं भोक्तुं भवद्गृहे ।। ३०
युक्तं महापात किनो मुनीनां धर्मकांक्षिणाम् ।
महापातकि भिस्साकं को वा संभाषयेन्नरः ।। ३१
तैः कुर्वाणा जना भाषां तत्संसर्गिण उच्यते ।
अतस्त्वद्दर्शनान्नृणां भाषणं च विगर्हितम् ।। ३२

भवद्दर्शनसंभाषासङ्गावासैश्च यन्मम ।
संजातं पातकं तस्य निष्कृतिः क्रियते मया ॥ ३३
महापातकिनो यैश्च दृश्यन्तेऽज्ञानतो यदि ।
तत्पापपरिशुद्ध्यर्थं दर्शनीयो रविश्च तैः ॥ ३४
तस्मात्तद्दोषशान्त्यर्थं यश्यामो रविमञ्जसा ।
एवं कहोलं प्रत्युक्त्वा निर्गतस्तद्गृहाद्बहिः ॥ ३५
गत्वा गृहान्तरं भुक्त्वा सहशिष्यैर्द्विजोत्तमः ।
यथास्थानं ययौ श्रीमान् दुर्वासाः मुनिपुङ्गवः ॥ ३६
ततस्सन्तप्त हृदयो दुःखेन बहुधा श्वसन् ।
कहोलो गर्हयन् तृष्णामात्मानं च मुहुर्मुहुः ॥ ३७
इतिकर्तव्यतामूढश्चिन्तयामास साध्वयम् ।
मया कृतस्य स्तेयस्य प्राणत्यागादृते नहि ॥ ३८
प्रायाश्चित्तमिति ज्ञात्वा प्रातितिक्षदसुं प्रति ।
असुत्यागं चिकीर्षुस्स कहोलो धैर्यमाप्य च ॥ ३९
नद्यां स्नात्वा ततश्शंभुं संपूज्य विधिवत्तदा ।
सांबं चन्द्र कलाचूडं स्तुत्वा स्तोत्रैरनेकधा ॥ ४०
प्रणम्य दण्डवद्भूमौ ध्यात्वा सर्वेश्वरं शिवम् ।
प्रज्वाल्य सहसा वह्निं प्रवेष्टुमुपचक्रमे ॥ ४१
अग्निप्रवेशनाच्छुद्धिमन्विच्छन्नात्मनः पुनः ।
ब्रह्मविष्ण्वादिकान् देवान् स्तोतुं समुपचक्रमे ॥ ४२
सदा मामभिरक्षन्तु ब्रह्मविष्णु महेश्वराः ।
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ ४३
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय मे ।
आखण्डलोऽग्नि भंगवान् यमो वै निर्ऋतिस्तथा ॥ ४४

वरुणः पवनश्चैव धनाध्यक्षः सदाशिवः ।
ब्रह्मणा सहिताः शेष दिक्पालाः पान्तु मामितः ।। ४५
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिश्श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा रतिश्शान्ति स्तुष्टिः कान्तिश्च मातरः ।। ४६
एता मामनिशं पान्तु स्वर्णस्तेयकृतैनसम् ।
आदित्यश्चन्द्रमा भौमो बुधो जीवस्सितोऽर्कजः ।। ४७
ग्रहा मां पावयंत्वस्माद् राहुकेतू महैनसः ।
देवदानवगन्धर्वयक्षराक्षस पन्नगाः ।। ४८
ऋषयो मानसाश्चान्ये देवमातर एव च ।
देवपत्न्यो मृगा नागा दैत्या ये दानवा गणाः ।। ४९
गणाधिपश्च ते सर्वे सर्वाश्चाप्सरसां गणाः ।
आग्नेयादीनि चास्त्राणि शस्त्राणि विविधानि च ।। ५०
राजानो वाहनान्येव सागरास्सप्त सिन्धवः ।
गङ्गाद्याः पर्वता वृक्षास्तीर्थानि च ह्रदानि च ।। ५१
एता मां पावयंत्वस्मात् स्वर्णस्तेयान्महैनसः ।
इति संप्रार्थ्य तान्देवान् ब्रह्मादीन् द्विजसत्तमः ।। ५२
वह्निं प्रदक्षिणीकृत्य प्रवेष्टुमुपचक्रमे ।
तस्मिन्नवसरे दिव्या वाणी चाकाशगोचरा ।। ५३
प्राह गंभीरया वाचा दैवतैः प्रेरिता सती ।
अहो कहोल भूदेव श्री वाञ्छ्ये सति तिष्ठति ।। ५४
किमर्थं क्रियते देहत्यागो वह्नौ त्वयाऽधुना ।
सह्यजादक्षिणे तीरे पूर्वसागरपश्चिमे ।। ५५
सार्धयोजन दूरे तु श्री वाञ्छ्यं भुक्तिमुक्तिदम् ।
तस्मिन् तीर्थवरं चास्ति देवर्षिगणसेवितम् ।। ५६

एकोनैश्च सहस्रांशैस्साकं गङ्गा बहूदका ।
पुण्यपुष्करिणी तीर्थे जलरूपेण वर्तते ।। ५७

यथा जना न जानीयुस्तथा वसति तत्र वै ।
तस्यै पुरा वरं दत्तं शंभुना विश्वयोनिना ।। ५८

कृत्तिकाभानुवारेषु ये स्नान्ति त्वयि मानवाः ।
भानुवारक्रमेणैव ब्रह्महत्यादिपातकैः ।। ५९

मुच्यन्तु मनुजास्सर्वे मत् प्रसादान्ममाज्ञया ।
एतेन वरदानेन गुप्तगङ्गा निमज्जनम् ।। ६०

कार्तिकेये भानुवारे प्रायश्चित्तं भवेद् ध्रुवम् ।
स्तेयस्येति प्रतिज्ञाय विररामाशरीरिणी ।। ६१

तच्छ्रुत्वा सहसोत्फुल्लनयनोऽथ कहोलकः ।
तस्मात्स सहसा प्रायाच्छ्रीवाञ्छ्यं प्रत्यतन्द्रितः ।। ६२

पुण्याख्यनलिनी नाम गङ्गा यत्र हि वर्तते ।
गत्वा तार्तीयिके भानुवासरेऽथ कहोलकः ।। ६३

स्नात्वा सद्यो विमुक्तोऽभूत् स्तेयदोषात्तदा मुने ।
पुनस्तदानीं दैवी वाक्कहोलं प्राह मद्वचः ।। ६४

शृण्वन्तु देवतास्सर्वा ऋषयश्च तपोधनाः ।
त्रिर्वदामि कहोलाख्यः शुद्धोऽभूत्स्तेयदोषतः ।। ६५

इत्युक्त्वा विररामाथ पुनश्चाकाशसंभवा ।
समाकर्ण्य तु तद्वाक्यं तत्रत्या ब्रह्मवादिनः ।। ६६

संशयांस्तत्यजुस्तत्र ब्रह्महत्यादि नाशने ।
ततः कहोल स्सन्तुष्टः स्थानस्याग्रेयभूतले ।। ६७

घटिका त्रयमात्रे तु कृत्वा स्वाश्रममुत्तमम् ।
तत्र स्थित्वा प्रतिदिनं श्री वाञ्छयेशं निषेव्य च ।। ६८

निमज्ज्य गुप्तगङ्गायां सन्तर्प्य स्वपितॄन्मुदा ।
कृत्वा स्वाश्रमधर्माणि भुक्त्वा भोगांश्च पुष्कलान् ।। ६९
अन्ते शैवं पदमगाच्छ्रीवाञ्छ्येशप्रसादतः ।
इदानीमपि चाग्नेयकोणे तिष्ठति सुव्रत ।। ७०
कहोलाश्रममित्येव* कहोलेन विनिर्मितम् ।
कहोलचरिताध्यायं ये शृण्वन्ति पठन्ति च ।। ७१
तेषां पापानि नश्यन्ति स्वर्णस्तेयादिकान्यहो ।
अत्रार्थे सन्दिहानेभ्यः पुरुषेभ्यः प्रयत्नतः ।। ७२
न वक्तव्यं त्वया ब्रह्मबन्धुला इति मन्यताम् ।
एवं साम्बस्सुयज्ञाय प्रोक्त्वा स्तेयस्य निष्कृतिम् ।। ७३
विरराम महातेजा विमलज्ञानसागरः ।। ७४

इति श्री साम्बोपपुराणे श्री वाञ्छ्यमाहात्म्ये दशमोऽध्यायः ।।

## पञ्चविंशोऽध्यायः

सुयज्ञः –

त्रयाणां ब्रह्महत्यादिपापानां स्नानमात्रतः ।
प्रायश्चित्तं त्वया प्रोक्तमितिहासपुरस्सरम् ।।
चतुर्थकृत्तिकाभानुवासरस्नानमात्रतः ।
गुरुस्त्रीगमनाद्दोषात्पूतो भवति चेद्वद ।। २

साम्बः –

एवमुक्तस्सुयज्ञेन साम्बस्सर्वविदां वरः ।
प्राह गम्भीरया वाचा सुयज्ञाय महात्मने ।। ३
वङ्गदेशपुरी काचिच्चन्द्रिका नाम विश्रुता ।
यज्ञभक्ताभिधो नाम्ना तस्य भार्या कुमुद्वती ।। ४

★ குவளைகான்

तस्यामुत्पादयामास यज्ञभक्ताह्वयं सुतम् ।
जातमात्रे कुमारेऽसौ जनको निधनं गतः ॥ ५
बभूव तस्य तनयो दुर्बोध इति नामतः ।
दुर्बोधाख्यः पितुस्तस्य कृत्वा कर्मौर्ध्वदैहिकम् ॥ ६
मात्रा विधवया साकमवसत् स द्विजात्मजः ।
अवर्षणाद्द्वादशाब्ददुर्भिक्षमभवत्तदा ॥ ७
ततो देशान्तरमगान्मात्रा साकं द्विजोत्तमः ।
प्रयागं स समासाद्य सुभिक्षं धान्यसंचयैः ॥ ८
उवास सुचिरं कालं मात्रा विधवया सह ।
ततो बहुतिथे काले दुर्बोधः कामपीडितः ॥ ९
पूर्वदुष्कृतबाहुल्याद्रागान्धीकृतमानसः ।
मामेति वादिनीमम्बां बलादाकृष्य पातकी ॥ १०
काम मोहेन बुभुजे मातरं वै द्विजोत्तमः ।
ततस्तु खिन्नो दुर्बोधो रेतस्सेकादनन्तरम् ॥ ११
चिन्तयन्मनसा पापं रुरोद भृश दुःखितः ।
अहोऽतिपापकृदहं महापातकिनां वरः ॥ १२
अगमं मातरं यस्मात्कामबाणवशङ्गतः ।
इति सञ्चिन्त्य मनसा प्रायश्चित्तार्थमादरात् ॥ १३
यत्र यत्राश्रमास्सन्ति मुनीनां भावितात्मनाम् ।
तत्र तत्र ययौ स्वस्य प्रायश्चित्तचिकीर्षया ॥ १४
दृष्ट्वा दुर्बोधनामानमेनं ते मुनयस्तदा ।
पिधाय नयने वाचं नामुञ्चन्नृषिसत्तमाः ॥ १५
स्वात्मानं निन्द्यमानस्तान्मुनीनाह स्म भो मुने ।
गुर्वङ्गनासङ्गमतो यत्पापं समजायत ॥ १६
तत् पापपरिशुद्ध्यर्थं प्रायश्चित्तं मम द्विजाः ।

केवलं कृपया ब्रूथ मयि शास्त्रार्थपारगाः ॥ १७
मरणं निष्कृतिस्स्याच्चेन्मरिष्यामि न संशयः ।
भवद्भिरुच्यते तत्तु प्रायश्चित्तं ममाधुना ॥ १८
तत्करिष्ये द्विजास्सत्यं मरणं वान्यदेव वा ।
तच्छ्रुत्वा वचनं तस्य मौनित्वं भेजिरे जनाः ॥ १९
अविमुक्तं ततः प्राप्य विश्वेशस्याग्रतः स्थितः ।
तपश्चकार सुमहत् ध्यात्वा विश्वेश्वरं हृदि ॥ २०
ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षेष्वभ्रावकाशकः ।
हेमन्ते तु ह्रदावासी ततापि हि सुदुष्करम् ॥ २१
एवं सन्तप्यमानस्य वत्सरत्रयमभ्यगात् ।
ततः प्रसन्नो विश्वेशो विशालाक्ष्या जगत्पतिः ॥ २२
कैलासशिखराकारं वृषमास्थाय सत्वरम् ।
प्रादुरासीदुमादेव्या तस्मै दातुमभीप्सितम् ॥ २३
तं दृष्ट्वा साम्बमीशानं विश्वनाथं जगद्गुरुम् ।
बद्धाञ्जलिपुटो भूत्वा विनयेन समन्वितः ॥ २४
प्रणम्य दण्डवद्भूमौ प्रस्तोतुमुपचक्रमे ।
दुर्बोधस्तुतिः–
नमस्ते विश्वनाथाय विश्वगोप्त्रे नमो नमः ॥ २५
विशालाक्षी समेताय वृषभस्थाय ते नमः ।
विश्वभर्त्रे विश्वनेत्रे विश्वहन्त्रे नमोस्तु ते ॥ २६
विश्वकर्त्रे विश्वभर्त्रे विश्वमूर्ते नमोस्तु ते ।
वीराय वीरभद्राय वीतिहोत्राय ते नमः ॥ २७
यज्ञाय यज्ञरूपाय यज्ञेशाय नमो नमः ।
पशूनां पतये तुभ्यं लोकानां पतये नमः ॥ २८

अम्बिकापतये तुभ्यमापन्नार्ति प्रभञ्जिने ।
आद्याय जगतामन्तकारिणे च नमो नमः ॥ २९

इति स्तुत्वा महादेवं हृदि ध्यात्वा पुरः स्थितः ।
ततः प्रसन्नो देवेशो भक्ताभीष्टप्रदः शिवः ॥ ३०

प्राह गम्भीरया वाचा दुर्बोधं ब्राह्मणाधमम् ।
मद्राजधानीमागत्य दुर्बोधेन त्वयाऽधुना ॥ ३१

स्नात्वा त्रिकालं गङ्गायां मणिकर्ण्यां सुभक्तितः ।
मत्प्रीत्यर्थं यतोऽकारि तपस्तुष्टोऽस्मि साम्प्रतम् ॥ ३२

किमभीष्टं तवादेयं विद्यते मे न किञ्चन ।
इत्युक्तो विश्वनाथेन दुर्बोधाख्यः प्रसन्नधीः ॥ ३३

शिरस्यंजलिमाधाय विनयेन समन्वितः ।
साम्बं चन्द्रकलाचूडं प्रष्टुं समुपचक्रमे ॥ ३४

दुर्बोधः—

अहोऽतिपापकृदहं महापातकिनां वरः ।
अगमं जननीं यस्मात् कामबाणवशङ्गतः ॥ ३५

प्रायश्चित्तं मम ब्रूहि जननीगन्तुरव्यय ।
मरणान्निष्कृतिः स्याच्चेन्मरिष्यामि न संशयः ॥ ३६

भवता प्रोच्यते यत्तु प्रायश्चित्तं ममाधुना ।
तत् करिष्ये प्रभो सत्यं मरणं वान्यदेव वा ॥ ३७

तच्छ्रुत्वा वचनं तस्य दुर्बोधस्य महेश्वरः ।
चिन्तामवाप महतीं प्रायश्चित्तविधौ शिवः ॥ ३८

जननीगमनात्पापात् पापं नास्ति महत्तरम् ।
ममाविमुक्तादधिकं क्षेत्रं नास्ति महत्तरम् ॥ ३९

मदीयमणिकर्ण्याख्यतीर्थान्नास्ति महत्तरम् ।
तथापि वर्तते क्षेत्रमेकं तीर्थन्तु मत्प्रियम् ॥ ४०

यत्र गङ्गा सहस्रांशैरेकोनैर्वर्तते सदा ।
यस्मिन् क्षेत्रे सदा देव्या ब्रह्मविष्ण्वादिभिस्सुरैः ॥ ४१
पूर्णानन्दमयो भूत्वा निवसामि ततोऽधिकम् ।
क्षेत्रमस्ति समानं वा नास्ति नास्त्यधिकं क्षितौ ॥ ४२
एवं विशिष्य बहुधा प्रायश्चित्तविधौ शिवः ।
महत्सु पञ्चसु महापापेष्वेतन्महत्तरम् ॥ ४३
जननीगमनं यस्मात्तस्मान्नान्यत्र गच्छति ।
इति मत्वा तमाहूय दुर्बोधाख्यं द्विजोत्तमम् ॥ ४४
प्राह दुर्बोध जननीगमनस्य तवाधुना ।
प्राणत्यागादृते नास्ति प्रायश्चित्तं श्रुतौ स्मृतौ ॥ ४५
आराधितोऽस्मि भवता यस्मात्तस्मादयत्नतः ।
स्नानमात्रेण जननीगमनस्य निवृत्तये ॥ ४६
प्रब्रवीमि रहस्यं तद्गोपनीयं प्रयत्नतः ।
न वक्तव्यं कृतघ्नाय नास्तिकाय विशेषतः ॥ ४७
सह्यजादक्षिणे तीरे योजनद्वयमात्रके ।
*रक्तारण्यं मम स्थानात्पश्चिमे प्रहरार्धके ॥ ४८
श्रीवाञ्छ्यमिति विख्यातं स्थानं मुक्तिप्रदं कलौ ।
तीर्थश्रेष्ठं च तत्रास्ति मच्छूलेन विनिर्मितम् ॥ ४९
तस्मिन् गङ्गासहस्रांशैरेकोनैर्मदनुज्ञया ।
यथा जना न जानीयुर्गुप्ता सा तत्र वर्तते ॥ ५०
यदाऽस्मान्निरगाद्गङ्गा संस्थाप्यैकांशमत्र तु ।
अन्यैरंशैस्तत्र गत्वा प्रसिद्धाऽभूज्जगत्त्रये ॥ ५१
गुप्तगङ्गेति तस्यां तु पञ्चपातकिनो जनाः ।
मज्जनात्ते विमुक्तास्स्युर्व्रजन्ति मम मन्दिरम् ॥ ५२

* திருச்செங்காட்டான்குடி

तस्मात्त्वमपि तत्रैव गुप्तगङ्गाजलेऽमले ।
तुरीयकृत्तिकाभानुवासरे भुक्तिमुक्तिदे ।। ५३
स्नात्वा तु मातृगमनाद्दोषान्मुक्तो भव क्षणात् ।
इत्युक्त्वा स विशालाक्ष्या तिरोभावं गतः शिवः ।। ५४
ततः प्रसन्नो दुर्बोधो वाचं श्रुत्वा शिवस्य तु ।
निर्गत्य सहसा मात्रा गत्वा श्रीवाञ्छ्यभूतलम् ।। ५५
स्नात्वा तु गुप्तगङ्गायां मात्रा साकमयत्नतः ।
गुरुस्त्रीगमनाद्दोषाद्विमुक्तस्तत्क्षणेन हि ।। ५६
ततो दुर्बोधनामाऽसौ श्री वाञ्छ्यक्षेत्र वैभवम् ।
तीर्थस्य वैभवं चापि भानुवारस्य वैभवम् ।। ५७
सर्वं ज्ञात्वा चिरं कालं मात्रा साकं महामुने ।
स्थित्वा तत्रैव दुर्बोधो मात्रा मुक्तोऽभवन्मुने ।। ५८
ये ज्ञात्वा गुप्तगङ्गाया वैभवं मनुजा भुवि ।
स्नान्ति ते सर्व पापेभ्यो विमुक्तास्स्युर्न संशयः ।। ५९
इदं हि पुण्यमाख्यानं ये शृण्वन्ति पठन्ति च ।
ते वै गुर्वङ्गनासङ्गदोषान्मुक्ता भवन्त्युत ।। ६०

इति श्री साम्बोपपुराणे श्री वाञ्छ्यमाहात्म्ये एकादशोऽध्यायः ।।

## षड्विंशोऽध्यायः

सुयज्ञः—

सम्यगुक्तं हि भवता प्रायश्चित्तमनुत्तमम् ।
चतुर्णां ब्रह्महत्यापातकानां महामुने ।। १
दुर्बोधस्य विशेषेण गुप्तगङ्गानिमज्जनात् ।
गुरुस्त्रीसङ्गदोषस्य त्वया प्रावादि मोचनम् ।। २

पञ्चमे भानुवारे श्रीवाञ्छ्ये संसर्गदोषतः ।
मज्जनाद्गुप्तगङ्गायां मुक्तो यः कश्चिदस्ति चेत् ।। ३
पञ्चमः पातकी साम्ब तद्वदस्व दयानिधे ।
साम्बः–
साध्वपृच्छि त्वया ब्रह्मन्मया साधूच्यते तथा ।। ४
कालजिन्नाम भूदेवो गुप्तगङ्गानिमज्जनात् ।
संसर्गदोषान्मुमुचे वसिष्ठस्य कृपाबलात् ।। ५
सुयज्ञः–
कालजिन्नामको ब्रह्मन् कुत्रत्यस्तस्य कः पिता ।
संसर्गः पापिभिस्तस्य कथं जातो महामुने ।। ६
संसर्गाज्जातपापस्य गुप्तगङ्गानिमज्जनात् ।
तस्य मुक्तिः कथमभूद्वसिष्ठस्य कृपाबलात् ।। ७
तत्सर्वं वद तत्त्वेन श्रोतुकामस्य मे मुने ।
साम्बः–
रेवातीरे महारम्ये ग्रामो वै स्तबकाह्वयः ।। ८
तत्र कश्चित् द्विजवरः कलिजिन्नाम नामतः ।
कालजिन्नाम तस्यासीत्पुत्रो लोकहिते रतः ।। ९
जन्मप्रभृति सर्वेषां जन्तूनां हितकृत्सदा ।
वेदाध्ययनसम्पन्नः सर्वशास्त्रविशारदः ।। १०
पुराणधर्म शास्त्रेषु निष्णातः सत्यवाक्छुचिः ।
ब्रह्मचर्याश्रमरतो भिक्षाचरणकर्शितः ।। ११
नियमाध्ययनं कृत्वा दत्वा स्वगुरुदक्षिणाम् ।
ब्रह्मचर्यव्रतं यद्यत्सर्वं निर्वृत्य तत्वतः ।। १२
ऋणादृषीणां निर्मुक्तस्त्वपाकर्तुमृणद्वयम् ।
मतिं कृत्वा विवाहाय पित्रोर्निकटमेत्य च ।। १३

नमस्कृत्वा तु पितरौ कालजिद्वाक्यमब्रवीत् ।
ब्रह्मचर्याश्रमोक्तानि कृत्यान्याचरितानि मे ॥ १४
मया त्विदानीं गार्हस्थ्यमाप्तुमाश्रममंजसा ।
ऋणद्वयमपाकर्तुं मनीषा वर्ततेऽधुना ॥ १५
अनुज्ञां कुरुतामद्य भवन्तौ पितरौ मम ।
एवमुक्तौ तु पितरावनुज्ञां चक्रतुर्मुदा ॥ १६
तदानीमेव निर्गत्य कालजिन्नाम भूसुरः ।
कन्यां कनक सम्पन्नां समानामसगोत्रजाम् ॥ १७
उद्वाह्य स्वोचिताचारं सम्यक्कृत्वा विधानतः ।
तप्त्वा तपांसि चोग्राणि ब्रह्मणो वरदानतः ॥ १८
इन्द्रादिलोकपालानां लोकेषु गमनं विधेः ।
लब्ध्वा सम्मानमात्रेण सन्तोषं परमं ययौ ॥ १९
यदा दिदृक्षा लोकानां जायते तस्य तत्क्षणे ।
निर्गत्य वायुवेगेन वीक्ष्य लोकांस्तपोबलात् ॥ २०
पुनश्च वायुवेगेन सम्प्रयायात् स्वमाश्रमम् ।
तस्यैवं वर्तमानस्य तपसा ज्वलितप्रभाः ॥ २१
एवं गृहे निवसतश्चत्वारो धार्मिकास्सुताः ।
जाताः पितृऋणान्मुक्तो यष्ट्वा देवं त्रियम्बकम् ॥ २२
देवतानामृणान्मुक्तः परमां मुदमाप्तवान् ।
ततः कतिपये काले पुत्रा ववृधिरेतराम् ॥ २३
स्नेहपाशेन पुत्राणां बद्धः कालजिदाह्वयः ।
पुत्रान्नाशिक्षयद्बाल्ये विद्याभ्यासार्थमादितः ॥ २४
ततस्ते वै दुरात्मानो विटगोष्ठीपरायणाः ।
वेदाध्ययनहीनत्वात्सदाचारविनिन्दकाः ॥ २५

ब्रह्मद्वेषरता मूढा ब्रह्मविद्यापराङ्मुखाः ।
मूर्खाश्च बुद्धिहीनाश्च जातास्तस्य महात्मनः ॥ २६
ततः कतिपये काले यौवनं प्राप्य ते सुताः ।
कृत्याकृत्यमजानन्तो मदोन्मत्ता मुनेऽभवन् ॥ २७
कृतानि वेदहीनैस्तु ब्रह्मद्वेषिभिरन्वहम् ।
सुतैः कृतानि पापानि जानन्नपि महामुनिः ॥ २८
नात्यजत्पुत्रवात्सल्यात्सहवासमरोचत ।
अब्दमात्रे गते काले तस्य कालजितो मुनेः ॥ २९
सर्वं नष्टं तपो वीर्यं ब्रह्मण्यं च ततः परम् ।
लोकानां गमने वाऽपि शक्तिर्नष्टा महात्मनः ॥ ३०
निन्दितश्च जनैस्सर्वैर्ब्राह्मणैर्वेदपारगैः ।
महापातकिभिः पुत्रैः सार्धमब्दं दुरात्मभिः ॥ ३१
सहवासः कृतो यस्मात्तेन दोषेण पञ्चमः ।
अयमप्यत्र सन्देहो नास्ति संसर्गपातकी ॥ ३२
सर्वैरेवं निन्द्यमानो जनैः कालजिदाह्वयः ।
चिन्तामवाप महतीं दुःखशोकसमन्वितः ॥ ३३
इदानीमेव निर्गत्य गत्वा स्वर्लोकमुत्तमम् ।
दृष्ट्वा च देवराजानं तद्गुरुं च बृहस्पतिम् ॥ ३४
नत्वाऽस्मदीयपापानां पृष्ट्वा तस्मात् प्रतिक्रियाम् ।
पश्चात्तेनोक्तमार्गेण प्रायश्चित्तं विधानतः ॥ ३५
कृत्वा शुद्धा भविष्यामो वयमेवमचिन्तयत् ।
एवं विचिन्त्य सहसा भूमेरुत्क्रान्तुमारभत् ॥ ३६
तस्य चोत्क्रममाणस्य नष्टा शक्तिर्विधेर्बलात् ।
अशक्तो ह्यूर्ध्वगमने पुनश्चिन्तापरोऽभवत् ॥ ३७

क्व गच्छामि क्व यास्यामीति चिन्तापरे सति ।
दैवतप्रेरिता देवी वागाकाशे मनोहरा ।। ३८
ब्राह्मणं शोक सन्तप्तं माभैषीरित्युवाच तम् ।
हे कालजिन्मयोक्तं यत्तत्कर्तव्यं त्वयाऽधुना ।। ३९
वसिष्ठस्याश्रमं प्रायाः पप्रच्छास्य च निष्कृतिम् ।
तुभ्यं प्रावादि यत्तेन तत्स्यात्तस्य प्रतिक्रिया ।। ४०
ततस्तेनोक्तमार्गेण पुत्रैस्साकं द्विजोत्तम ।
कृत्वा पापविशुद्ध्यर्थं शुद्धो भव महैनसः ।। ४१
इत्युक्त्वो परता वाणी परमाकाशगोचरा ।
ततो निर्गत्य सहसा पुत्रैस्साकन्तु कालजित् ।। ४२
वसिष्ठस्याश्रमं प्रायाच्छुश्रूषुस्तस्य निष्कृतिम् ।
तस्मिन्दृष्ट्वा वसिष्ठं तं नत्वा तु ब्रह्मणस्सुतम् ।। ४३
प्राञ्जलिर्विनयोपेतः प्रवक्तुमुपचक्रमे ।।
कालजित् –
स्वामिन् मदीयां विज्ञप्तिं शृणुष्वारुन्धतीपते ।। ४४
रेवातीरे महान् ग्रामः स्तबकाख्यो महामुने ।
तस्मिन् द्विजवरः कश्चित् कलि जिन्नाम नामतः ।। ४५
तस्याहमौरसः पुत्रो नाम्ना कालजिदाह्वयः ।
तपसाऽराध्य देवेशं ब्रह्माणं च पितामहम् ।। ४६
प्रसादात् ब्रह्मणो लब्धं लोकानां गमनं मया ।
ततः कतिपये काले गते लोकान्तरेषु मे ।। ४७
गतिः स्तब्धा ततश्चिन्ता मम चासीत्तदा विभो ।
चिन्तांचिते मयि तदा प्राह वागशरीरिणी ।। ४८
मा विचारं कुरुष्वात्र ब्रह्मन्कालजिदाह्वय ।
ब्रह्महत्यादिपापानि चत्वारि तव चात्मजैः ।। ४९

कृतानि तैस्सहावासं त्वयाऽकार्येकहायनम् ।
तेन त्वं पञ्चमः पापी जातो यस्मात् स्थितश्च तैः ॥ ५०
तेन लोकान्तरगतिस्स्तब्धा पापबलेन ते ।
पुनर्लोकान्तरप्राप्त्यै निष्कृत्यर्थं कृतैनसः ॥ ५१
वसिष्ठं शरणं याहीत्येवं वागशरीरिणी ।
ततस्त्वां शरणं प्राप्तः पुत्रैस्साकं महामुने ॥ ५२
अतः कृपां कुरु ब्रह्मन्रक्ष रक्ष दयानिधे ।
यत् कृत्वा ब्रह्म हत्यादिपापेभ्योऽहं सपुत्रकः ॥ ५३
मुच्येत तन्ममाचक्ष्व कृपयाऽरुन्धतीपते ।
एवमुक्तः कालजिता वसिष्ठो ब्रह्मणस्सुतः ॥ ५४
परया कृपया युक्तः प्राह कालजितं प्रति ॥ ५५
वसिष्ठः –
सह्यजादक्षिणे तीरे योजनद्वयमात्रके ॥ ५६
श्रीवाञ्छ्यमिति विख्यातं स्थानं मुक्तिप्रदं नृणाम् ।
श्रीभूकैलासमिति च श्रीगन्धारण्यमित्यपि ॥ ५७
वदन्ति नाम चास्यैव कल्पभेदेन कारणात् ।
तस्य स्थानसमं स्थानं न कुत्रापि जगत्त्रये ॥ ५८
तत्र वै वर्तते स्थानं तव पापाद्भयं कुतः ।
एकोनैश्च सहस्रांशैर्गङ्गा तत्रैव वर्तते ॥ ५९
प्राणिभिः पापिभिः कस्माद्भेतव्यं कालतोऽपिवा ।
भैरवाच्च न भेतव्यं नरकेभ्यस्तथैव च ॥ ६०
स्नातव्यं गुप्तगङ्गायां स्थातव्यं वत्सरं नृभिः ।
ध्यातव्यं सच्चिदानन्दरूपिणं वाञ्छितार्थदम् ॥ ६१
यस्य वै वेदविज्ञानं सुनिश्चितधियो न हि ।
स वै श्री वाञ्छ्यनगरं मुमुक्षुश्चाश्रयेत्कलौ ॥ ६२

ये त्वयत्नेन संसारान्मुक्तिमिच्छन्ति मानवाः ।
ते भूकैलासनगरं त्वाश्रयंत्वन्यथा न हि ॥ ६३

कृत्याकृत्यमजानन्तो ये वै स्वोदरपूरकाः ।
ते वै श्रीगन्धविपिनमाश्रयेयुरथान्तिमे ॥ ६४

येऽन्त्यकाले तनुं तत्र श्रीगन्धारण्यभूतले ।
त्यजन्ति पापिनस्तेषां कैवल्यं तु करे स्थितम् ॥ ६५

तत्स्थाने कृत्तिकाभानुवासरः पञ्चमो यदा ।
समागच्छति तस्मिन् वै दिने पुण्यतमे द्विज ॥ ६६

षट्षष्टिकोटि तीर्थानि षष्टिकोटिशतानि च ।
स्वेषां पापापनोदार्थमीश्वरेण प्रचोदिताः ॥ ६७

तद्दिने स्नातुमायान्ति गुप्तगङ्गाजलेऽमले ।
तस्मिन् स्नानं सर्वपापप्रायश्चित्तं विदुर्बुधाः ॥ ६८

एकेनैव कृतं पापं ब्रह्महत्यादि पञ्चकम् ।
स्नानेन विलयं याति पञ्चमे भानुवासरे ॥ ६९

तत्र त्वं पञ्चमे भानुवासरे तु सपुत्रकः ।
गत्वा स्नात्वा विमुक्तो भूः श्रीवाञ्छ्ये भुक्तिमुक्तिदे ॥ ७०

इत्युक्त्वाऽरुन्धतीनाथः प्रपेदे स्वाश्रमं तदा ।
ततो निर्गत्य सहसा पुत्रैस्साकं स कालजित् ॥ ७१

प्रतीक्ष्य कृत्तिकाभानुवासरं पञ्चमं मुने ।
स्नात्वा तु गुप्तगङ्गायां पुत्रैस्साकं द्विजोत्तमः ॥ ७२

विमुक्तपापः स बभौ राहुमुक्त इवोडुराट् ।
ततस्तीरं समासाद्य कृत्वा देवादितर्पणम् ॥ ७३

निर्वृत्य दिनकृत्यं तु श्री वाञ्छ्येशं प्रणम्य च ।
यथाशक्ति च दानानि दत्वा तत्क्षेत्र वासिनाम् ॥ ७४

अन्नं सुसंस्कृतं तेभ्यो वाञ्छ्येशप्रीतिहेतवे ।
सदक्षिणं सताम्बूलं दत्वा तेषामनुज्ञया ॥ ७५
पुत्रैस्साकं द्विजो विद्वान् सन्तोषं परमं ययौ ।
ततस्तु तस्य स्नानस्य ज्ञात्वा माहात्म्यमुत्तमम् ॥ ७६
तत्र स्थित्वा चिरं कालं भुक्त्वा भोगाननेकशः ।
अन्ते कैलासमगमच्छ्रीवाञ्छ्येश प्रसादतः ॥ ७७
इदमाख्यानमाश्चर्यं यः पठेच्छुणुयादपि ।
ब्रह्महत्यादिपापेभ्यो मुक्तः शिवपदं व्रजेत् ॥ ७८

साम्बः-

सुयज्ञ ब्रह्महत्यादि पापानां शोधनं तव ।
स्नानमात्रेण हि मया प्रावादि परमं मुने ॥ ७९
अन्यपापप्रशमने स्नानाद्वक्तव्यमस्ति किम् ।
एतदाख्यानमायुष्यप्रदं शृण्वन्नरः पठन् ॥ ८०
भुक्त्वा तु विपुलान् भोगान् देहान्ते स्वर्गमेष्यति ॥ ८१

इति श्री साम्बोपपुराणे श्री वाञ्छ्यमाहात्म्ये दशमोऽध्यायः ॥

## सप्तविंशोऽध्यायः

सुयज्ञः—

साम्ब साम्बपदद्वन्द्व ध्याननिर्धूतकिल्बिष ।
अपारपार संसारसागरोत्तारण प्रभो ॥ १
त्वत्तोऽश्रावि मया भानुवाराणां स्नानजं फलम् ।
इतिहासेन सहितं भुक्तिमुक्तिफलप्रदम् ॥ २
अधुना कृत्तिकाभानुवारस्नानविधिक्रमान् ।
पञ्चानां भानुवाराणं यथावद्वद मे मुने ॥ ३

साम्बः–

तथैव ते प्रवक्ष्यामि शृणुष्वैकमना भवान् ।
पार्वत्यै हिमवच्छैले तया सम्प्रार्थितः पुरा ॥ ४

प्रोक्तवान् पार्वतीनाथो विधानं तु पृथक्पृथक् ।
तद्विधानं समाकर्ण्य जन्मसाफल्यमाप्नुहि ॥ ५

स्नातुकामस्तु पूर्वेद्युरुपोष्य विजितेन्द्रियः ।
गृहीतनियमो मौनी गत्वा श्री वाञ्छ्यभूतलम् ॥ ६

कृत्वा सायन्तनीं सन्ध्यां जपित्वा च सरस्वतीम् ।
श्री वाञ्छ्य नगराधीशगोपुरद्वारपालकम् ॥ ७

अभयङ्करविघ्नेशं प्रणम्यादौ ततः परम् ।
श्री गन्धविपिनाधीशं श्री गन्धारण्यनायिकाम् ॥ ८

पाहीति प्रणमेत् पञ्च पञ्चपातकशान्तये ।
प्रतिप्रदक्षिणं नत्वा नत्वा द्वादश वाग्यतः ॥ ९

पदं पदान्तरं गत्वा करौ चलनवर्जितौ ।
हृदि ध्यायन्महादेवं वाचा स्तोत्रमुदीरयन् ॥ १०

सम्यकृत्वा च पितरौ जगतां परया मुदा ।
अनन्यमनसा देवं देवीं च परया मुदा ॥ ११

संसेव्य जगतामीशौ पार्वतीपरमेश्वरौ ।
स्वाभीष्टं प्रार्थयानस्तु जागृयात्सन्निधौ निशि ॥ १२

निशायां सुप्रभातायां देहशुद्धिपुरस्सरम् ।
तीर्थतीरं समासाद्य महासङ्कल्पपूर्वकम् ॥ १३

स्वाभीष्टमपि सङ्कल्प्य नाभिदघ्नजले स्थितः ।
तीर्थाधिदेवतां विष्णुं भैरवं क्षेत्र पालकम् ॥ १४

विघ्नेश्वरं कुमारं च श्रीगन्धारण्यनायकम् ।
श्रीवाञ्छ्यनायिकामम्बां महिषघ्नीं च संस्मरन् ॥ १५

प्रार्थयानस्ततो मन्त्रैस्स्नायात् स्वाघनिवृत्तये ।
प्रार्थनामन्त्रः –
वासुदेव हरे विष्णो भूतभावन केशव ॥ १६
नमस्तुभ्यं ममेदानीं तीर्थं देहि जनार्दन ।
विष्टरश्रवसे तुभ्यं नमो विष्णो ह्यपां पते ॥ १७
देह्यनुज्ञां भवत्तीर्थमज्जने मे रमापते ।
अतिक्रूर महाकाय कल्पान्तदहनोपम ॥ १८
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ।
श्वानवाहन वाञ्छ्येशस्थानपालन धूर्जटे ॥ १९
आसीनभैरव विभो नमस्तुभ्यं प्रसीद मे ।
दंष्ट्राकरालवदन भ्रुकुटीकुटिलेक्षण ॥ २०
आसीनभैरव विभो देहि तीर्थफलं मम ।
अभयङ्कर विघ्नेश नमस्तुभ्यं गजानन ॥ २१
त्वत्प्रसादात्तीर्थफलं याचयामि गणाधिप ।
मयूरध्वज देवेश द्वादशाक्ष द्विषड्भुज ॥ २२
सुब्रह्मण्य नमस्तुभ्यं तीर्थं मे दातुमर्हसि ।
वृषध्वज विरूपाक्ष श्री गन्धारण्यवल्लभ ॥ २३
सर्व पापविनाशार्थं तीर्थं देहि महेश्वर ।
श्री वाञ्छ्येश्वर सर्वेश सर्वतीर्थफलप्रद ॥ २४
देहि स्नातुमनुज्ञां मे तीर्थेऽस्मिन् भुक्ति मुक्तिदे ।
अम्बिके त्वामहं वन्दे श्री गन्धारण्यनायिके ॥ २५
सर्वपापविनाशार्थं तीर्थं देहि महेश्वरि ।
महिषघ्नि महामाये वासुदेवसहोदरि ॥ २६
नमस्ते सर्वमाङ्गल्ये तीर्थं देहि शुभे मम ।
एवं सम्प्रार्थ्य विष्ण्वादीन् प्रतिभानुदिनं पुनः ॥ २७

प्रार्थ्यमानैस्तु मनुजैर्महापापापनुत्तये ।
प्रत्यर्कवासरं प्रार्थ्य श्री भूकैलासनामकम् ।२८
श्री गुप्तजाह्नवीतोये स्नायात् प्रागर्यमोदयात् ।
प्रार्थनामन्त्रः–
नास्प्राक्षीन्मां ब्रह्महत्या भ्रूणहत्यादिकाऽपि च ।। २९
मज्जनादत्र हत्या न स्पृशतीयं तथा कुरु ।
हालाहलो महादेव्याः कटाक्षेक्षणमात्रतः ।। ३०
तव कीला समभवद्यया तद्वन्ममापि च ।
पीता सुरा सुधा भूयाद्गुप्तगङ्गानिमज्जनात् ।। ३१
तुभ्यं नमस्तस्कराणां पतये स्वर्णतस्करम् ।
मामत्र मज्जनात्पूतं कुरु कारुण्य वारिधे ।। ३२
गुरुस्त्रीसङ्गजो दोषो गुप्तगङ्गानिमज्जनात् ।
कलानिधेर्यथा तद्वन्मदीयोऽपि विनश्यतु ।। ३३
ब्रह्मणः पञ्चमं येन शिरोऽच्छेदि बलीयसा ।
भैरवेण यथा सङ्गस्तव दोषाय नो भवेत् ।। ३४
तथा महापापकृतां सङ्गाद्योऽजनि मे शिव ।
तद्दोषो नश्यतु क्षिप्राद्गुप्तगङ्गानिमज्जनात् ।। ३५
इति सम्प्रार्थ्य देवेशं श्री गन्धारण्यवल्लभम् ।
प्रतिभानुदिनं तत्तन्मन्त्रैस्सम्प्रार्थ्य सादरम् ।। ३६
वाससी परिधायाथ भस्म धृत्वा यथाविधि ।
सपवित्रकरः पश्चात्कुर्यात्सन्ध्यां यथाविधि ।। ३७
वन्दनं चापि सन्ध्यायाः कृत्वा वेदस्यमातरम् ।। ३८
जपित्वाऽष्टोत्तरशतं गायत्रीध्यानपूर्वकम् ।
उपस्थाय रविं पश्चात् क्षेत्रश्राद्धं ततश्चरेत् ।। ३९

श्राद्धं च द्विविधं प्रोक्तमामपाकविशेषतः ।
पाकाच्छतगुणं श्रीमदामश्राद्धं विशिष्यते ।। ४०
पाकश्राद्धं गृहस्थानामामश्राद्धं प्रवासिनाम् ।
तस्मात्क्षेत्रेषु कर्तव्यमामश्राद्धं सदक्षिणम् ।। ४१
दक्षिणारहितं श्राद्धमासुरं तत् प्रकीर्त्यते ।
श्राद्धं हैरण्यमुत्कृष्टमामश्राद्धात् द्विजोत्तम ।। ४२
दानहीनं वृथा स्नानं वृथा होमो वृथा जपः ।
दानेन पूरयेत्सर्वं तस्माद्दानं विशिष्यते ।। ४३
अतो ब्राह्मणमुख्येभ्यः क्षेत्रवासिभ्य एव च ।
दत्वा दानानि सर्वाणि यथाविभवविस्तरम् ।। ४४
पश्चाद्देवालयं गत्वा वाञ्छितार्थफलप्रदम् ।
श्री वाञ्छ्यनायिकामम्बां कालभैरवमेव च ।। ४५
महाभिषेक नैवेद्यैस्संपूज्य परया मुदा ।
दत्वाऽन्नं द्विजवर्येभ्यः षड्रसोपेतमादरात् ।। ४६
दक्षिणां भुक्तवद्भ्योऽथ व्रतस्य परिपूर्तये ।
प्रार्थयेत ततस्तेभ्यो नत्वा स्वस्य मनोरथान् ।। ४७
दीनानाथां स्तथान्नेन सन्तोष्याथ महाव्रती ।
ततो भुञ्जीत विप्रेभ्योऽनुज्ञां प्राप्य स्वबान्धवैः ।। ४८
एवं यः कुरुते स्नानं विधिदृष्टेन वर्त्मना ।
तस्य पापानि सर्वाणि नश्यन्त्येव न संशयः ।। ४९

सुयज्ञः–

भूयोऽपि गुप्तगङ्गाया माहात्म्यं स्नानदानयोः ।
कालं च तस्मिन्दानानि विचित्राणि वदस्व मे ।। ५०

साम्बः—

एवमेव पुरा लक्ष्म्या लक्ष्मीजानिर्महामुने ।
प्रार्थितः प्रोक्तवान् तस्यै श्री देव्यै भुक्तिमुक्तिदे ॥ ५१

तत्सर्वं ते प्रवक्ष्यामि शृणुष्वैकमना भवान् ।
वीरनक्तंचरो नाम राक्षसः क्रूरचेतनः ॥ ५२

सञ्चचार महीं कृत्स्नां मुनिमांसानि भक्षयन् ।
कदाचिद्दैवयोगेन श्री गन्धारण्यभूतलम् ॥ ५३

प्रविश्य तत्र स्थितवान् दिनानि कतिचित्तदा ।
तस्मिन्काले कार्यवशादागत्य घटजो मुनिः ॥ ५४

तं दृष्ट्वा सहसा तत्र तिष्ठन्तमृषिसत्तमम् ।
कराभ्यां जगृहेऽगस्त्यं जग्धुं वीरनिशाचरः ॥ ५५

ह्रियमाणस्तदाऽगस्त्यो वामपादेन लीलया ।
उज्जहारोरसि क्षिप्रं तेनोत्पातेन राक्षसः ॥ ५६

पतितो गुप्तगङ्गायां जन्मान्तर तपोबलात् ।
सद्यो विधूतपापस्तु दिव्यस्त्रीपरिसेवितः ॥ ५७

विमानं कामगं प्राप्य गतवान् स्वर्गमुत्तमम् ।
अगस्त्यस्य पदस्पर्शात्तस्य तीर्थस्य वैभवात् ॥ ५८

निमज्जनाच्च मुक्तोऽभूद्वीरनक्तंचराभिधः ।
तन्नाम्ना वर्ततेऽद्यापि स्थानं तस्य दुरात्मनः ॥ ५९

तीर्थस्य पुरतो भागे घटिकामात्रतः परे ।
*वीराक्रान्त इति ख्यातस्सर्वसस्यसमृद्धिमान् ॥ ६०

अज्ञानादथवा ज्ञानाद्भक्त्याऽभक्त्याऽपि वा सकृत् ।
ये निमज्जन्ति पापेभ्यः ते मुच्यन्ते न संशयः ॥ ६१

★ வீராக்கண்

सुयज्ञः–
कदा गत्वा स्थितोऽगस्त्यः तस्मिन् श्री वाञ्छ्यभूतले ।
तद्वदस्व यथातत्वं सर्वसन्देहनाशक ॥ ६२

साम्बः–
ईश्वरेण पुराऽगस्त्यः प्रेषितो वेदकाननम् ।*
प्रतिप्रयाण समये गत्वा श्री वाञ्छ्यभूतलम् ॥ ६३
ज्ञात्वाऽऽधिक्यं च माहात्म्यमविमुक्ताद्विशेषतः ।
सहस्रं गुणमाधिक्यं तस्य मेने घटोद्भवः ॥ ६४
षट्षष्टि कोटि तीर्थानां सान्निध्यं च सदा मुनिः ।
एकत्र गुप्तगङ्गायां दृष्ट्वा विस्मितमानसः ॥ ६५
अस्य स्थानस्य सदृशं न भूमौ विद्यते क्वचित् ।
इति ज्ञात्वा स्थितस्तस्मिन् दिनानि कतिचिन्मुनिः ॥ ६६
तदा श्री वाञ्छ्यलिङ्गस्य चाग्नेय्यां दिश्यनुत्तमम् ।
अदूराच्छिवलिङ्गं च प्रतिष्ठाप्य स्वनामतः ॥ ६७
संपूज्य विधिवन्नत्वा प्रययौ वेदकाननम् ।
अद्यापि वर्तते लिङ्गमगस्त्येश्वर संज्ञितम् ॥ ६८

सुयज्ञः–
बोधितोऽस्मि त्वया सम्यग्गुप्तगङ्गासुवैभवम् ।
प्रति स्नानस्य मे कालं विशिष्टं ब्रूहि तत्त्वतः ॥ ६९

साम्बः–
जूककीटमनुप्राप्ते हंसे त्रिंशद्दिनेऽपि वा ।
नृणां पापक्षयकरं स्नानं सर्वार्थ सिद्धिदम् ॥ ७०
विषुवायनकालेषु पुण्ययोगेषु सर्वदा ।
एकादश्यां तथाऽष्टम्यां चतुर्दश्यामुभावपि ॥ ७१

★ வேதாரண்யம்

पूर्णिमायाममावास्यां चन्द्रसूर्योपरागयोः ।
वैधृतौ च व्यतीपाते द्वादश्यां च युगादिषु ॥ ७२
मन्वादिषु च संक्रान्तावर्धोदयमहोदये ।
मृगेन्द्रं समनुप्राप्ते भानौ तद्वासरेषु वै ॥ ७३
ये स्नान्ति मनुजास्तेषां महापातक कोटयः ।
जन्मान्तरीया नश्यन्ति गुप्तगङ्गानिमज्जनात् ॥ ७४
याः स्त्रियस्स्नान्ति गुप्तायां गङ्गायां भानुवासरे ।
श्रावणे ताः पतिं भाग्यं पुत्रमायुष्यमेव च ॥ ७५
आरोग्यं सत्कुले जन्म सर्वाभीष्टमवाप्य च ।
इह भुक्त्वा महाभोगान् गमिष्यन्ति त्रिविष्टपम् ॥ ७६
रजस्संकरणादिभ्यः पापेभ्यो मुक्तिमाप्नुयुः ।
तस्मादेतेषु कालेषु स्नानं सर्वार्थसिद्धिदम् ॥ ७७
उक्तो विशिष्टकालस्ते गुप्तगङ्गा निमज्जने ।
दानेऽपि च ततो वक्ष्ये दानसंग्रहमादरात् ॥ ७८
पापपुण्यफलं लोके प्रत्यक्षं खलु दृश्यते ।
देवदानवमानुष्यतिर्यक्कीटपतङ्गकाः ॥ ७९
नानायोनिषु जन्मानि नानाव्याधि प्रपीडनम् ।
मरणं बालवृद्धत्वमंधत्वं कुब्जता तथा ॥ ८०
ऐश्वर्यं च दरिद्रत्वं पाण्डित्यं मूढता तथा ।
एताश्चान्याश्च लोके हि भवन्ति कथमन्यथा ॥ ८१
ते धन्याः कर्मभूमौ ये न्यायमार्गार्जितं धनम् ।
सत्पात्रेभ्यः प्रयच्छन्ति ते कुर्वन्त्यात्मनो हितम् ॥ ८२
कायक्लेशेन यद्द्रव्यं स्वल्पं वा यदि वा बहु ।
यद्दत्तं श्रद्धया सत्सु तदनन्तफलं स्मृतम् ॥ ८३

दानानामुत्तमं दानमन्नदानं विशिष्यते ।
अन्नं प्राणो मनुष्याणामन्नदः प्राणदो भवेत् ।। ८४
अन्नदः पशुमान्लोके ह्यन्नदः पुण्यकृत्तमः ।
अन्नदः प्रीतिकृत्पुंसामन्नदस्साधुसम्मतः ।। ८५
अन्नदस्सर्वदो ज्ञेयस्तस्मादन्नं परं स्मृतम् ।
पानीयं प्रीतिदं सद्यस्सर्वेषां प्राणिनामृषे ।। ८६
पानीयदानात्परमान्नारदो मान्यतां गतः ।
सुवर्णधनरत्नानि गावो धान्यं गृहं गजाः ।। ८७
रथाश्च वसन ग्रामास्सस्याढ्या च वसुंधरा ।
कन्या विद्यौषधं मन्त्रं छत्रोपानद्वरायनम् ।। ८८
शय्याताम्बूलमालादि तालवृन्तं वराजिनम् ।
यज्ञोपवीतं काष्ठं च शीतकालेऽग्निमुत्तमम् ।। ८९
तैलं फलमनड्वाहं शरणागत पालनम् ।
सर्वमेतत् प्रदातव्यं लोकद्वयजिगीषुभिः ।। ९०
दत्तं हि प्राप्यते स्वर्गे दत्तमेवेह भुज्यते ।
तस्माद्दानं प्रयत्नेन श्रोत्रियेभ्यो विशेषतः ।। ९१
अवंध्यं दिवसं कुर्यान्नादत्तमुपतिष्ठते ।
तसाद्दानाय सत्पात्रं विचार्यैव प्रयत्नतः ।। ९२
दातव्यमन्यथा सर्वं भस्मनीव हुतं भवेत् ।
तस्मादवश्यं तत्तीर्थे दातव्यं भुक्तिमुक्तिदम् ।। ९३
पात्रभूतान् प्रवक्ष्यामि शृणु यत्तेन चेतसा ।
वेदवेदान्ततत्वज्ञाः शास्त्रज्ञाश्च जितेन्द्रियाः ।। ९४
श्रौतस्मार्तक्रियानिष्ठा दरिद्राश्च कुटुंबिनः
तपस्विनस्तीर्थरताः कृतज्ञा मितभाषिणः ।। ९५

गुरुशुश्रूषणरता नित्यं स्वाध्यायतत्पराः ।
शूद्रान्नरहिता ये च शूद्र सेवाविवर्जिताः ॥ ९६

महादेवार्चनरता भस्मरुद्राक्षभूषिताः ।
परहिंसाविरहिताः पात्रभूता द्विजोत्तमाः ॥ ९७

एभ्य एव प्रदातव्यमिच्छेद् फलं यदि ।
एभ्य एव प्रदातव्यं नान्येभ्य इति निश्चितम् ॥ ९८

उक्तं सुयज्ञ भवतः कृत्तिका भानु वासरम् ।
प्रति स्नानं विधानं ते यथाविधि महामुने ॥ ९९

एतद्विधानं यो ब्रूते मठे देवालयेऽपि वा ।
ब्राह्मणानां समाजेषु तस्य प्रीणाति शंकरः ॥ १००

एतद्विधानं यः श्रुत्वा यथाविध्यनुतिष्ठति ।
स मुक्तस्सर्वपापेभ्यः शिवलोकं स गच्छति ॥ १०१

इति श्री साम्बोपपुराणे श्री वाञ्छ्यमाहात्म्ये सप्तविंशोऽध्यायः ॥

## ॥ अष्टाविंशोऽध्यायः ॥

सुयज्ञः-

कथं सांब महाप्राज्ञ कैलासादिपदे स्थिते ।
श्री वाञ्छ्य नगरे शंभोः स्थितिः कस्माद्वदस्व मे ॥ १

सांबः–

आदिकल्पे महाविष्णुः शंभोर्वामाङ्गसं भवः ।
लोकसंरक्षणे शक्तिमिच्छन् श्री वाञ्छ्यभूतलम् ॥ २

गत्वा सांबं समुद्दिश्य तपस्तेपेऽतिदुष्करम् ।
अनेककोटि वर्षाणि व्यतीयुस्तस्य तत्र हि ॥ ३

न च प्रादुरभूद्विष्णोः श्रीभूकैलास नायकः ।
ततो विषण्णो भगवान्लक्ष्मीजानिर्जगन्मयः ॥ ४

छेत्तुं स्वस्य च मूर्धानमग्नौ क्षेप्तुं चिकीर्षति ।
तदा तस्मिन्महादेवो ज्योतिर्लिङ्गाकृतिस्स्वयम् ॥ ५
प्रादुरासीत्पुरस्तस्य स्वभासा भासयन् जगत् ।
अनन्तादित्यसंकाशमनन्ताग्निसमप्रभम् ॥ ६
स्वयं भूतन्तु तल्लिंगं दृष्ट्वा विष्णुः प्रहर्षितः ।
तुष्टाव परमेशानं वाचा मधुरया तदा ॥ ७
नमो वेदान्तवेद्याय नमोऽनन्तसुखाय ते ।
नमस्स्वयं प्रकाशाय नमो मायाविभेदिने ॥ ८
नमः कल्याणनिधये नमो भक्तार्तिभंजिने ।
प्रपंचावनसामर्थ्यं मम देहि महेश्वर ॥ ९
ततो लिङ्गात्समुत्थाय सांबश्चन्द्रार्धशेखरः ।
प्राह गंभीरया वाचा पद्माक्षं परमेश्वरः ॥ १०
वेदाः प्रलयकाले मां विष्णो प्रविविशुः पुरा ।
प्रपञ्चावनसामर्थ्यं तेभ्यो ज्ञातव्यमेव हि ॥ ११
तस्मान्मत्तो गृहाण त्वं वेदानवनवाचकान् ।
इत्युक्त्वोपदिदेशाथ तस्मै मापतये हरः ॥॥ १२
ततोऽग्रहीन्महाविष्णुः प्रीताच्च परमेश्वरात् ।
ज्ञात्वा वेदार्थमखिलं प्रपञ्चावनमव्ययम् ॥ १३
सन्तोषं परमं प्राप्य ततश्शंभुमभाषत ।
सन्निधानं सदा त्वस्मिन् लिङ्गे कुरु महेश्वर ॥ १४
सर्वप्राण्युपकारार्थं लिङ्गरूपी दयानिधे ।
ओमित्युक्त्वा तु भगवांस्तस्मिन् लिङ्गे तिरोहितः ॥ १५
स्वयंभूतमिदं लिङ्गं स्व प्रकाशं निरंजनम् ।
श्री वाञ्छ्य नगरे भाति ह्यद्यापि मुनि पुङ्गव ॥ १६

लिङ्गस्य दर्शनं तस्य महापातकनाशनम् ।
एवमासीत् स्थितिस्तस्य श्री वांञ्छ्य नगरे विभोः ।। १७
विष्णोरनुग्रहार्थाय कैलासादावपि स्थिते ।
लोकानामवने शक्तिं प्रार्थयानोऽब्धिजापतिः ।। १८
वर्ततेऽद्याप्येक एव विना लक्ष्म्या महेश्वरः ।
तस्य श्री वाञ्छ्यलिङ्गस्य माहात्म्यं परमाद्भुतम् ।। १९
वक्ष्यामि संग्रहेणैव सङ्गृह्णातु भवानिह ।
मेरुमन्दरकैलासकाशीश्रीपर्वतादिषु ।। २०
शिवक्षेत्रेषु सर्वेषु सर्वसिद्धिप्रदेषु च ।
स्वायम्भुवानि लिङ्गानि नाविरासीद्यदा पुरा ।। २१
तदा ह्याविरभूल्लिङ्गं श्रीगंधारण्यमध्यमे ।
तस्मान्नानेन सदृशं लिङ्गमन्यत्पुरातनम् ।। २२
श्रुतिस्मृतिपुराणेषु मुने नास्त्यागमेष्वपि ।
वाञ्छितार्थप्रदातृत्वं विनिश्चित्य दिवौकसः ।। २३
वाञ्छ्यनाथाभिधानं च चक्रलिङ्गस्य हे मुने ।
श्री गंधविपिनोद्भूते श्री गन्धारण्यनायकम् ।। २४
श्री भूकैलासनिलयाच्छ्रीभूकैलासनायकम् ।
भ्रूणघ्नपावनाद्धेतोर्भ्रूणघ्नेशं च तं विदुः ।।। २५
अन्यान्यनन्त नामानि संति कारणभेदतः ।
तस्य लिङ्गस्य सदृशं न भूतं न भविष्यति ।। २६
अतस्सर्वैस्सुसंसेव्यं सर्वलिङ्गमयं परम् ।
धर्मार्थकाममोक्षाणामालयं परमार्थतः ।। २७
यज्ञानां हयमेधश्च पर्वतानां हिमालयः ।
व्रतानां सोमवारश्च मन्त्राणान्तु षडक्षरम् ।। २८

दानानामन्नदानं च वर्णानां ब्राह्मणो यथा ।
पात्राणां शिवभक्तश्च धर्माणां शिवधर्मवत् ॥ २९

देवानां तु महादेवो वृक्षाणां तु सुरद्रुमः ।
धेनूनां कामधेनुश्च तीर्थानां गुप्तजाह्नवी ॥ ३०

चिन्तामणिस्तु रत्नानां यथा मुख्यः प्रकीर्तितः ।
तथा लिङ्गेषु सर्वेषु वाञ्छ्यलिङ्गं महत्तरम् ॥ ३१

तल्लिङ्गं जगतां मूलं तल्लिङ्गं तु परात्परम् ।
तल्लिङ्गन्तु परं ज्योतिस्तल्लिङ्गं सर्वसिद्धिदम् ॥ ३२

तस्मिन् श्री वाञ्छ्यलिङ्गे तु सन्निधत्ते सदाशिवः ।
स्वायंभुवानि लिङ्गनि यानि संति महीतले ॥ ३३

तानि सर्वाणि चायांति द्रष्टुं श्री वाञ्छ्यनायकम् ।
सेव्यते यैर्महालिङ्गं भक्त्या स्वायंभुवं जनैः ॥ ३४

साक्षात्कारेण गिरिशस्सेवितस्तैर्न संशयः ।
सूर्योदये तमांसीव मृगेन्द्राग्रे यथा गजः ॥ ३५

सुज्ञानेन यथाऽज्ञानं पन्नगा गरुडेक्षणे ।
महावातेन जीमूताश्शैला वज्रभृता यथा ॥ ३६

तथा नश्यंति पापानि श्री वाञ्छ्येश्वरदर्शनात् ।
यथा मनीषा कामेन क्रोधेन च यथा तपः ॥ ३७

यथैव विद्या गर्वेण रोगा दिव्यौषधेन च ।
लोभेन सद्गुणो यद्वत्तूल शैलं स्फुलिङ्गतः ॥ ३८

प्रणश्यति तथा दोषः श्री वाञ्छ्येश्वरदर्शनात् ।
श्री वाञ्छयेशं महालिङ्गं दृष्ट्वा प्रातस्सकृन्नरः ॥ ३९

चतुस्समुद्र पर्यन्त भूमिदानफलं लभेत् ।
मध्याह्ने तु सकृद्दृष्ट्वा श्री गन्धारण्य नायकम् ॥ ४०

सहस्र कपिलादानफलं प्राप्नोति मानवः ।
सायाह्ने तु सकृद्दृष्ट्वा श्री भूकैलास नायकम् ।। ४१
गवां कोटि प्रदानस्य फलं मर्त्यस्समश्नुते ।
अर्धरात्रे सकृद्दृष्ट्वा भ्रूणघ्नेशं च शाश्वतम् ।। ४२
अश्वमे धादियज्ञानां फलं प्राप्नोति भक्तिमान् ।
एवं विचार्य मतिमान् पुण्याधिक्यं दिने दिने ।। ४३
श्री वाञ्छ्यनगरीनाथं तासु वेलासु भो मुने ।
प्रदक्षिण नमस्कारस्तोत्राद्यैस्सेवते च यः ।। ४४
सर्वपापविनिर्मुक्तः सर्वैश्वर्य समन्वितः ।
इह भुक्त्वा महाभोगान् सायुज्यं लभते च सः ।। ४५
स्मरणात्तस्य लिङ्गस्य दशजन्मार्जितं त्वघम् ।
अवश्यं विलयं याति वह्निना तूलराशिवत् ।। ४६
श्रवणाद्वाञ्छ्यलिङ्गस्य पातकं शतजन्मजम् ।
अवश्यं नश्यति क्षिप्रं तमस्सूर्योदये यथा ।। ४७
श्री वाञ्छ्येश्वर सेवार्थं गृहान्निष्क्रमते तु यः ।
सहस्र जन्मजनितं तस्य नश्यति पातकम् ।। ४८
श्री गंधवननाथस्य दर्शनाल्लिङ्ग रूपिणः ।
अश्वमेध सहस्रस्य सुकृतं लभते नरः ।। ४९
स्तोत्रैर्वा रुद्रसूक्तैर्वा स्तुते श्रीवाञ्छ्य नायके ।
राजसूयसहस्रस्य फलं भवति तस्य वै ।। ५०
चुलुकोदकमात्रेण तल्लिङ्गं स्नापयेत्तु यः ।
अन्यत्र हेमकलशमहास्नानफलं लभेत् ।। ५१
विधाय महतीं पूजां पञ्चगव्यपुरस्सरैः ।
पञ्चामृतैश्च शुद्धोदैर्गंधाद्यैर्भक्तिमान्नरः ।। ५२

श्री वाञ्छ्येशस्य लभते पुरुषार्थचतुष्टयम् ।
वस्त्रपूतैर्जलैर्यस्तु तल्लिङ्गमभिषिंचति ॥ ५३
सकृल्लक्षाश्वमेधानां फलं प्राप्नोत्यसंशयम् ।
यस्तु चन्दनकस्तूरीकुङ्कुमेनानुलिप्य तम् ॥ ५४
कर्पूरादिसुगंधैश्च सकृच्छ्रीवाञ्छ्य नायकम् ।
आप्नोति दिव्यगंधैश्च सुरस्त्रीभिर्महोत्सवम् ॥ ५५
अर्चयत्येकपुष्पेण वाञ्छ्यलिङ्गं सकृन्नरः ।
अन्यत्र शतसौवर्णपुष्पपूजाफलं लभेत् ॥ ५६
सकृत् प्रदानाद् धूपस्य क्षमते वाञ्छनायकः ।
सहस्राण्यपराधानामृणाब्धेस्तारयेच्च तम् ॥ ५७
नैवेद्यान्ते तु कर्पूर नीराजनमतः परम् ।
तांबूलं चन्दनाटव्या नायकस्य प्रयच्छति ॥ ५८
इहाऽऽप्य सकलान्भोगान् शिवलोके महीयते ।
श्री वाञ्छ्येश्वरपूजायै यो दद्या द्भक्तियोगतः ॥ ५९
घण्टाभिषेककलश धूपदीपार्घ्यपात्रकम् ।
स मुक्तस्सर्वपापेभ्यस्सर्वान्कामान् समश्नुते ॥ ६०
यो नमस्कुरुते भक्त्या श्री वाञ्छ्येशं महीतले ।
त्रैलोक्यवन्दितपदो जायते वसुधाधिपः ॥ ६१
जपो होमस्तथा दानं श्री वाञ्छ्येश्वरसन्निधौ ।
कृतमल्पं महत्पुण्यफलदं स्यान्न संशयः ॥ ६२
श्री गन्धारण्यनिलय श्री वाञ्छ्येशमहाप्रभोः ।
महामाहात्म्यमखिलं को वा स्तोतुं विचक्षणः ॥ ६३
श्री गन्ध कान्तारसमं तपोवनं श्रीगुप्तभागीरथितुल्यतीर्थम् ।
श्री चन्दनारण्यमहाप्रभोरहो लिङ्गस्य साम्यं न हि लिङ्गमन्यत् ॥ ६४

लिङ्गरूपं महालिङ्गं केचिच्छ्रीवाञ्छ्य नायकम् ।
भूलोककैलासाधीशमिति केचिज्जगुः पुनः ॥ ६५
श्री चन्दन वनाधीशमन्ये भ्रूणघ्नशङ्करम् ।
अपरे विश्वनाथं चेत्येवमूचुर्महर्षयः ॥ ६६
एवमाद्यैर्नामधेयैः स्तुवन्ति मुनिपुङ्गवाः ।
श्री गंधवन्यां शिवराजधान्यां
तेजोमयं यत्तु शिवस्य लिङ्गम् ।
आसप्तपातालतलात्स्वयंभुवं
समुत्थितं तज्जगतां हिताय ॥ ६७
तेजोमयमिदं लिङ्गं ब्रह्मणः प्रलये मुने ॥ ६८
कृते रत्नमयं लिङ्गं त्रेतायां स्वर्णवर्णकम् ।
द्वापरे राजतं लिङ्गं कलौ शैलमयं मुने ॥ ६९
एवं लिङ्गस्य माहात्म्यं मयाऽवादि तवाधुना ।
ऽत्रैषा मुपकारार्थं मुनीन्द्राणां विशेषतः ॥ ७०
यस्त्वेतत्पठते नित्यं लिङ्गं माहात्म्यमुत्तमम् ।
देवालये नदीतीरे शृणुयाद्यो नरोत्तमः ॥ ७१
पापानि तस्य नश्यन्ति सत्यं सत्यं वदाम्यहम् ।
भुक्त्वा तु सकलान्भोगानन्ते स्वर्गं गमिष्यति ॥ ७२

इति श्री सांबोपपुराणे श्री वाञ्छ्य माहात्म्ये
चतुर्दशोऽध्यायः

## ॥ अथ एकोनत्रिंशोऽध्यायः ॥

सांबः-

अतः परं प्रवक्ष्यामि ह्यार्द्रावैभवमुत्तमम् ।
शृणुष्व मुनिशार्दूल श्री वाञ्छ्ये भुक्तिमुक्तिदे ॥ १

तरणौ चापमापन्ने भूकैलासे विमुक्तिदे ।
रुद्रभे गुप्तगङ्गायां स्नात्वा श्री वाञ्छ्यनायकम् ।। २
सभापतिं च ये भक्त्या भजन्ते भववारिधेः ।
सद्यो विमुक्तास्ते सर्वे मुक्तिं यास्यन्त्यसंशयम् ।। ३
ये भजन्ते सभानाथं चन्दनारण्यमध्यगम् ।
नरकाणि न यान्त्येव रौरवादीनि भो मुने ।। ४
रौरवं च वसाकूपं तथा वैतरणीं नदीम् ।
श्वभक्षं मूत्रपानं च रक्तभाजनमेव च ।। ५
वह्निज्वालाप्रवेशं च शाल्मल्यारोहणं तथा ।। ६
वह्निवृष्टिं शिलावृष्टिं कालसूत्राह्वयं तथा ।
तप्तशूलं तप्तशिलां पुरीषह्रदमेव च ।। ७
पुरीष भोजनं रेतःपानं संधिषु भेदनं ।
अङ्गारशय्या भ्रमणं तथा मुसलमर्दनम् ।। ८
अधः शिलाबंधनं च क्षारसेचनमेव च ।
पुरीषलेपनं चैव तथा क्रकचदारणम् ।। ९
पाषाणयन्त्र पीडां च मरुत् प्रपतनं तथा ।
पतनोत्पतनं चैव गदा पीडनमेव च ।। १०
एतानि नरकाण्यार्द्रासेवको हि न पश्यति ।
पाशबंधं धूमपानं नानाशूलनिपीडनम् ।। ११
मुखे च नासिकायां च क्षारोदकनिषेवणम् ।
गजदन्तैश्च हननं नानाभुजगदंशनम् ।। १२
स्नायुच्छेदं स्नायुदाहमस्थिभेदनमेव च ।
क्षारांबुपानं नरकं तप्तायःपिण्डभक्षणम् ।। १३
अत्युष्णतैलपानं च श्लेष्मपानमधोमुखम् ।
पित्तपानं मूत्रपानं रेतः पानं तथैव च ।। १४

अत्युष्ण सिकतास्नानं तप्तायश्शयनं तथा ।
तप्तसेचनकं सूचीक्षेपणं मुखनेत्रयोः ॥ १५

शिश्ने सवृषणे चैव ह्ययोभारस्य बंधनम् ।
तीक्ष्णधारास्त्रशय्यां च कुंभीपाकादिकान्यपि ॥ १६

नरकाणि न पश्यन्ति भजमानाः सभापतिम् ।
वाञ्छ्येशं च नरास्स्तन्यं न पिबन्ति प्रसोः पुनः ॥ १७

मुक्ता भवन्ति संसारसागरन्नात्र संशयः ।
तस्मात्तस्मिन् दिने तस्य तुष्ट्यर्थन्तु सभापतेः ॥ १८

यस्तु ब्राह्मणमुख्येभ्यः षड्रसेन सभक्तिकम् ।
अन्नं ददाति तं मर्त्यं कांक्षते मुक्तिकामिनी ॥ १९

तस्मादवश्यं दातव्यमन्नं तस्मिन्दिने मुने ।
यस्त्वार्द्रायामुषःकाले श्री वाञ्छ्ये भुक्ति मुक्तिदे ॥ २०

स्नात्वा तु गुप्त गङ्गायां नटेशस्याभिषेचनम् ।
घृतेनान्नैर्दधिक्षी रैरन्यैर्द्रव्यैर्यथाबलम् ॥ २१

करोति भक्त्या विधिवन्नैवेद्यं च ततः परम् ।
तस्य पुण्यफलं यत्तच्छृणुष्व मुनिपुङ्गव ॥ २२

पुत्रमित्रकलत्राद्यै र्भुक्त्वा भोगांश्चिरं भुवि ।
अन्ते नटेशकृपया शिवलोके चिरं वसेत् ॥ २३

एकस्मै वा ददात्यन्नमार्द्रायां चापगे रवौ ।
स्नात्वा श्रीचन्दनवनाधीश्वरं च सभापतिम् ॥ २४

तस्मान्मुमुक्षुस्संसारात् विना विज्ञानमात्मनः ।
श्री वाञ्छ्यलिङ्गमार्द्रायां सभेशं चापि दर्शयेत् ॥ २५

सुयज्ञः-

यः कश्चिद्गुप्तगङ्गायामार्द्रायां चापगे रवौ ।
स्नात्वा श्री चन्दनवनाधीश्वरं च सभापतिम् ॥ २६

दृष्ट्वा विमुक्तो यद्यस्ति संसाराद्वद मे गुरो ।
सांबः-
अस्मिन्नर्थे पुरा वृत्तं वदामि तव सुव्रत ।। २७
कश्चिदासीद् द्विजवरो ज्ञानाब्धिरिति विश्रुतः ।
जन्मप्रभृति संसारान्मुमुक्षुर्बुद्धिमान् वशी ।। २८
सर्वाण्यध्यात्मशास्त्राणि वेदान्तप्रभृतीनि च ।
शतकृत्वस्सहस्रशश्श्रवणेऽपि समुत्सुकः ।। २९
नाभूत्तस्य तु विज्ञानं तेन दुःखेन दुःखितः ।
व्यासं वसिष्ठनप्तारं शरण्यं शरणं गतः ।। ३०
ततस्तु पाराशर्यन्तु नमस्कृत्वा यथाविधि ।
स्तुत्वा पप्रच्छ तं विष्णुरूपं व्यासं तपोनिधिम् ।। ३१
ज्ञानाब्धिः-
व्यास सत्यवतीसूनो वेदयोने दयानिधे ।
मम विज्ञापनं श्रुत्वा कृत्वा मयि दयां विभो ।। ३२
मत्वा त्वदीयदासं मां मुक्त्युपायं वद प्रभो ।
संसृतेर्ज्ञानतो मुक्तिरिति वेदान्तवाक्यतः ।। ३३
ज्ञात्वा वेदान्तशास्त्रादि शास्त्राण्यध्यात्मवन्ति च ।
सहस्रशश्च शतशस्त्वश्रावि च मया प्रभो ।। ३४
तथाऽपि मम नोदेति ज्ञानं व्यास महामुने ।
कथं वा संसृतेर्मुक्तिर्मनुष्याणां कलौ युगे ।। ३५
एवमुक्तो वसिष्ठस्य नप्ता ज्ञानाब्धिमाह हि ।
ज्ञानाब्धे तव वक्ष्यामि संसृतेर्मुक्तिकारणम् ।। ३६
ज्ञानोदयः कलौ नृणामसाध्यस्सर्वथा परम् ।
तथाऽपि तव वक्ष्यामि मुक्तिकामस्य संसृतेः ।। ३७

कारणं संग्रहेणैव रहस्यमतिपावनम् ।
पुरा सनत्कुमारादि मुनिभिः प्रार्थितो विधिः ॥ ३८
ज्ञानं विना कलौ नृणां संसृतेर्मुक्तिकारणम् ।
प्राप्तवान् मन्मुखात्तत्त्वं संशृणु ज्ञानवारिधे ॥ ३९

श्री व्यासः-

भूमेराग्नेयदिग्भागे वल्मीकाख्यं पुरं महत् ।
तस्य वायव्यदिग्भागे वर्तते प्रहरार्द्धके ॥ ४०
भूकैलासाभिधं क्षेत्रं कलौ श्री वाञ्छ्यसंज्ञिकम् ।
काश्याधिक्यमिति ब्रह्मवादिभिः प्रतिपादितम् ॥ ४१
तत्र गत्वा धनुर्मासे रौद्रभे मुनितीर्थके ।
स्नात्वा श्री वाञ्छ्यनाथाख्य विश्वेशञ्च सभापतिम् ॥ ४२
श्री वाञ्छ्यनायिकाञ्चैव विलोक्य च विमुक्तये ।
अन्यथा तु विना ज्ञानं कलौ मुक्तिस्सुदुर्लभा ॥ ४३
तस्मात्सर्वप्रयत्नेन तत्रार्द्रादर्शनं कुरु
एतत् ज्ञात्वा जनास्सर्वे मुक्तये भुक्तिमुक्तिदम् ॥ ४४
श्री वाञ्छ्यलिङ्गं सर्वेशं सच्चिदानन्दताण्डवम् ।
आर्द्रायां चापगे भानौ भजेयु र्ज्ञानवारिधे ॥ ४५
इदमुक्तं मया ब्रह्मन् मुक्त्युपायं तवाधुना ।
न प्रकाश्यमिदं मुक्तेरुपायं यस्य कस्यचित् ॥ ४६
इत्युक्त्वा तमनुज्ञाप्य स्थितो व्यासस्स्व आश्रमे ।
ततो निर्गत्य सहसा ज्ञानाब्धिर्ब्राह्मणोत्तमः ॥ ४७
श्री वाञ्छ्यनगरं गत्वा धनुर्मास्यथ रौद्रभे ।
स्नात्वा तु गुप्तजाह्नव्यां वाञ्छ्येशं च सभापतिम् ॥ ४८
दृष्ट्वा स्थित्वा चिरं कालं भुक्त्वा भोगांश्च पुष्कलान् ।
अन्ते नटेशकृपया ज्ञानाब्धिर्मुक्तिमाप्तवान् ॥ ४९

इदमाख्यानमायुष्यमार्द्रादर्शनवैभवम् ।
यः पठेच्छृणुयाद्वापि नरः पापैः प्रमुच्यते ।। ५०
तस्मिन्मासे व्यतीपातदिने श्री वाञ्छ्य संज्ञिके ।
एकस्मै वा दरिद्राय ब्राह्मणाय महात्मने ।। ५१
अन्नं ददाति यः कश्चित्तस्य पुण्यफलं शृणु ।
पुत्रमित्रकलत्राद्यैरिहाप्य विपुलां श्रियम् ।। ५२
भुक्त्वा तु विपुलान्भोगानन्ते कैलासमाप्य च ।
जन्मावाप्य पुन र्भूमौ साम्राज्याधिपतिर्भवेत् ।।

इति श्री सांबोपपुराणे श्री वाञ्छ्य माहात्म्ये पञ्चदशोऽध्यायः ।।

## ।। त्रिंशोऽध्यायः ।।

सांबः -

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि ते ।
पुरा राथन्तरे कल्पे द्वापरान्ते महामुने ।। १
विंध्यदेशोद्भवः कश्चित्काकजंघाह्वयः खलः ।
व्याधिक्षामवशात्तस्मार्न्निर्गत्य स्वात्मबन्धुभिः ।। २
सञ्चचार महारण्ये याम्ये दिशि नराधमः ।
वनाद्वनं परिभ्रम्य श्री गन्धारण्यमासवान् ।। ३
स श्री गंधाटवीं दृष्ट्वा विस्मितः काकजंघकः ।
तस्मिन्नरण्ये सर्वत्र चारयामास लोचने ।। ४
तत्र भक्ष्यसमृद्धिं तु दृष्ट्वा प्रीत्या सबांधवः ।
तत्रैव वासमकरोत्कृत्वा पर्णकुटीं तदा ।। ५
तत्र श्री गंधविपिने दृष्ट्वा स्थानं महत्तरम् ।
जलाशयं च संप्रेक्ष्य श्री वाञ्छ्येशस्य चोत्तरे ।। ६

सन्तोषं परमं लेभे निस्स्वः प्राप्य धनं यथा ।
तत्रैव सुचिरं कालं कृत्वा मृगवधादिकम् ।। ७
पोषयंश्चात्मनो बंधून् सञ्चचाराति हर्षितः ।
एवं सञ्चरता तेन काकजंघेन कालतः ।। ८
श्री गंधारण्यविपिनं परितः प्राणिवर्जितम् ।
प्रहरार्धमितो देशः कृतस्तेन दुरात्मना ।। ९
ततः कदाचित्तं देशं ब्राह्मणो ज्ञानदुर्बलः ।
यदृच्छया सपाथेयः क्षुत्तृष्णाभ्यां समन्वितः ।। १०
मृगयन्सुजलं भोक्तुं मध्याह्ने चापगे रवौ ।
आगतस्तेन चादर्शि पापिष्ठेन दुरात्मना ।। ११
तं ब्राह्मणमनुद्रुत्य तत्पाथेयं प्रगृह्य च ।
अनुद्घोष्य च कुत्रापि गच्छ कामं यथासुखम् ।। १२
अन्यथा त्वं मयेदानीं वध्यसे नात्र संशयः ।
तस्मात् प्राणेऽस्ति चेदिच्छा गच्छ तूष्णीमितः सुखम् ।।
१३

इत्युक्तिं तस्य संश्रुत्य व्याधस्य प्राणहारिणः ।
मूर्छामवाप नितरां पाथेयस्यापहारणात् ।। १४
बुभुक्षया च वार्धक्यात् प्राणाः कण्ठगतास्तदा ।
तं ब्राह्मणं कण्ठगतप्राणं दृष्ट्वा महामुने ।। १५
व्याधस्य हृदये पुण्य परिपाकात्पुराकृतात् ।
दया प्रादुरभूत्तस्य काकजंघस्य भो मुने ।। १६
यत्र श्री चन्दनवने श्री वाञ्छ्येशस्य चोत्तरे ।
वर्तते गुप्तगङ्गेति नाम्ना संसारमोचिनी ।। १७
तत्र गत्वा काकजंघः पद्मपत्रेण सत्वरम् ।
जलं गृहीत्वा विप्रस्य मुखे सम्यङ्न्यषेचयत् ।। १८

ततो मूर्छां निराकृत्य ब्राह्मणो जलसेकतः ।
प्रकृतिं स्वां ययौ पश्चात्पूर्व पुण्यविपाकतः ।। १९
काकजंघस्य हृदये दयाऽजनि पुनश्च भो ।
तत्पाथेयं पुनस्तस्मै प्रादाच्छ्रीगंधकानने ।। २०
व्यतीपातदिने चापमास्यार्ताय द्विजन्मने ।
तद्गृहीत्वा तु पाथेयं भुक्त्वा तत्रावसद्द्विजः ।। २१
आप्त्वा तृप्तिं परां तत्र प्रययौ स्वालयं प्रति ।
काकजंघोऽपि तत्रैव स्थित्वा श्री गंधकानने ।। २२
कालेन निधनं प्राप्तः श्रीगन्धारण्यतो बहिः ।
स्थित्वाऽपि सुचिरं कालं श्री गंधारण्यकानने ।। २३
नाप्रापि निधनं तत्र व्याधेनाघसमूहतः ।
तथाऽपि तेन पुण्येन व्यतीपातान्नदानतः ।। २४
सोमवंशे समुद्भूतो नाभाग इति पप्रथे ।
सप्तद्वीपाधिपश्चासीच्छ्रीवाञ्छ्यस्थान वैभवात् ।। २५

सुयज्ञः-

किं जानाति महामूढः काकजंघाभिधो मुने ।
जानाति किं महास्थानं माहात्म्यमथवा तिथेः ।। २६
वासरस्य च योगस्य नित्यनैमित्तिकस्य च ।
दानस्य दान पात्रस्य तत्फलस्य च पापधीः ।। २७
भावना फलदात्री स्यात् सा वा तस्यास्ति भो मुने ।
अथवा द्रव्य शुद्धिर्वा व्याधस्यास्य किमस्ति हि ।। २८
कथं सङ्गच्छते सांब महाराजकुलेऽजनि ।
न्यायार्जितेन द्रव्येण कर्तव्यं द्रव्यमिच्छता ।। २९
महाराजकुले तस्य जन्म वा तत्फलं कथम् ।
अन्यदीयान्नदानेन निषादस्य कथं फलम् ।। ३०

संदिह्यते मनो मेऽत्र त्वं हि सन्देह हानिकृत् ।
वद तत्वेन मे ब्रह्मन् सांब सर्वज्ञशेखर ॥ ३१
इत्युक्तस्स सुयज्ञेन सांबस्सर्व सतां वरः ।
उवाच श्रोतुकामाय सुयज्ञाय महात्मने ॥ ३२
सांबः-
सत्यमुक्तं त्वया ब्रह्मन् न्यायार्जितधनेन वै ।
धर्मः कर्तव्य इत्येव तस्य तन्न्याय्यमेव हि ॥ ३३
यस्य यन्न्यायतो दानं तद्दानं प्रब्रवीमि ते ।
प्रतिग्रहेण यल्लब्धं ब्राह्मणेन धनं बहु ॥ ३४
स्वल्पं वा तद्धनं तस्य न्यायार्जितमिहोच्यते ।
क्षत्रियेण महीं जित्वा यद्धनं समवाप्यते ॥ ३५
तद्धनं स्वार्जितं विद्धि तस्य तन्न्याय्यमुच्यते ।
वैश्येन यद्धनं लब्धं क्रयविक्रयणोद्भवम् ॥ ३६
तद्धनं न्याय्यमित्याहुस्तस्य वेदविदो जनाः ।
शूद्रस्य यद्धनं प्राप्तं तन्न्याय्यं कृषिकर्मणा ॥ ३७
ब्राह्मणानान्तु शुश्रूषा तथा क्षत्रियवैश्ययोः ।
शुश्रूषया धनं यत्स्याल्लब्धं तन्न्याय्यमुच्यते ॥ ३८
अयं प्राथमिकः कल्प उपकल्पः कृषिस्स्मृतः ।
तथा शबरजातीनां प्राणि हिंसारतात्मनाम् ॥ ३९
यद्द्रव्यमार्जितं प्राणिहिंसया शबरेण वै ।
चौर्येण वा छद्मना वा बलाद्वा यद्धृतं धनम् ॥ ४०
तत्सर्वं तद्धनं विद्धि तस्य तन्न्याय्यजं भवेत् ।
तस्मात्तेनान्नदानेन सार्वभौमोऽभवद्भुवि ॥ ४१
तदन्नं स्वार्जितं तस्य न्याय्यं चास्तु महामुने ।
किं ज्ञात्वा कृतवानन्नदानं भावनया तदा ॥ ४२

जानाति स्थानमहात्म्यं कालं प्राप्तमथापि वा ।
दानं वा तत्फलं वापि दातव्यं वा सुमूढधीः ।। ४३
तस्मात्तेनान्नदानेन सार्वभौमोऽभवन्मुने ।
अत एव हि पर्याप्तं फलं जातं महामुने ।। ४४
नो चेत्तस्य किरातस्य किं मुक्तिर्दुर्लभा मुने ।
चापमास्यन्नदानस्य व्यतीपातदिने स्थले ।। ४५
तस्मात्सर्वप्रयत्नेन श्रीचन्दनवने शुभे ।
चापं पतङ्गे संप्राप्ते व्यतीपातदिने वरे ।। ४६
अन्नं देयं ब्राह्मणेभ्यो यथाशक्ति स्वमुक्तये ।
उक्तं तव व्यतीपातमाहात्म्यं सेतिहासकम् ।। ४७
श्रोतॄणामपि वक्तॄणां सर्वकामार्थदं शुभम् ।
किमिच्छसि पुनश्श्रोतुं तत्पृच्छ मुनिपुङ्गव ।। ४८
एतदाख्यानमखिलं ये शृण्वन्ति पठन्ति वा ।
तेषां स्वर्गे भवेद्वासो नात्र कार्या विचारणा ।। ४९

इति श्रीसांबोपपुराणे श्रीवाञ्छ्यमाहात्म्ये षोडशोऽध्यायः

## ।। एकत्रिंशोऽध्यायः ।।

सुयज्ञः-
श्री वाञ्छ्ये गुप्तगङ्गायां माकरे सङ्क्रमे मुने ।
मज्जनात् प्राप्यते मर्त्यैः किं फलं भवताऽधुना ।। १
कथं वा सर्वसंक्रान्ति पुण्यकालविनिर्णयः ।
तत्सर्वं च समासेन मह्यं श्रद्धालवे वद ।। २
सांबः-
अयने विंशतिः पूर्वे मकरे विंशतिः परे ।
वर्तमाने तुलामासे नाड्यस्तूभयतो दश ।। ३

विष्णुपद्यामुभयतो घटिकाः षोडश क्रमात् ।
षडशीतिमुखे षष्टिः पश्चात्पुण्याः प्रकीर्तिताः ॥ ४

रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः ।
अर्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया ॥ ५

पूर्वे चैवार्धरात्रौ तु यदा संक्रमते रविः ।
तदा दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ॥ ६

यदा संक्रमते रात्रौ मकरे कर्कटे रविः ।
तदैव स्नानदानादि कुर्यादेवोपरागवत् ॥ ७

रात्रौ नेतरसंक्रान्तौ कुर्युस्स्नानं द्विजोत्तमाः ।
पुण्य कालो मयाऽवादि प्राणिनां हितकारिणाम् ॥ ८

उक्तेष्वेतेषु संक्रांतिपुण्यकालेषु ये नराः ।
मज्जंन्ति गुप्तजाह्नव्याममायां च विशेषतः ॥ ९

ब्रह्महत्यादिपापेभ्यस्समानेभ्यो विशेषतः ।
मुच्यन्तेऽतः सदा सर्वैस्सुसेव्या गुप्तजाह्नवी ॥ १०

सुयज्ञः-

ब्रह्महत्यादिपापानां समानानि महामुने ।
पापानि श्रोतुमिच्छामि वद तत्त्वेन साम्प्रतम् ॥ ११

सांबः-

तथैव ते प्रवक्ष्यामि शृणु युक्तेन चेतसा ।
पृथक्पाकी मार्गभेदी यतिर्ब्राह्मणदूषकः ॥ १२

आज्यतक्रादिविक्रेता पञ्चैते ब्रह्महासमाः ।
यस्माद्धर्मान्परिज्ञाय यस्तस्मै द्वेषमाचरेत् ॥ १३

विप्रान्वा योऽवजानाति ब्रह्महा सोऽप्युदीरितः ।
तृषार्तं जलपानार्थमायान्तं तु जलाशये ॥ १४

यो निवारयति ब्रह्मन् ब्रह्महा सोप्युदीरितः ।
ब्राह्मणेभ्यः प्रतिश्रुत्य दास्यामीति धनादिकम् ।। १५
पश्चान्नास्तीति यो ब्रूयात्तमाहु र्ब्रह्मघातकम् ।
ब्रह्महत्यासमानानि बहूक्तानि श्रुतिस्मृतौ ।। १६
ज्ञातव्यानि त्वया ब्रह्मन्मयोक्तं दिक्प्रकाशनम् ।
सुरापानसमानानि प्रोक्तानि शृणु चादरात् ।। १७
औपासनपरित्यागी केवलान्नस्य भोजकः ।
सुरापयोषित्संसर्गी गणिकान्नाशिनस्तथा ।। १८
गणान्नभोजिनश्चैव पतितान्नरताश्च ये ।
एते सुरापिनः प्रोक्तास्सर्वकर्मबहिष्कृताः ।। १९
सुरापानस्य तुल्यानि सन्त्यन्यान्यमितानि भो ।
स्वर्णस्तेयसमानानि मत्तः शृणु मलानि वै ।। २०
कन्दमूलफलानां च कस्तूरी पट्टवाससाम् ।
मध्वाज्यताम्रकांस्यानां रुद्राक्षाणां तथैव च ।। २१
पयश्चन्दनकर्पूरक्रमुकाणां तथैव च ।
चोरकास्तु परिज्ञाताः सुवर्णस्तेयिनस्समाः ।। २२
स्वर्णस्तेयसमानानि सन्त्यन्यानि बहूनि भो ।
गुरुदारसमानानि ह्युच्यमानानि तच्छृणु ।। २३
रजस्वलां पुत्रभार्यां भगिनीं च तथैव च ।
मित्रभार्यां भ्रातृभार्यां मद्यपां च परस्त्रियम् ।। २४
हीनस्त्रियं च विश्वस्तां योऽभिगच्छति रागतः ।
गुरुतल्पी स विज्ञेयस्सर्वकर्मबहिष्कृतः ।। २५
गुरुतल्पकतुल्यानि सन्त्यन्यानि महामुने ।
एकहायनमेतैर्यः संसर्गं कुर्वते नराः ।। २६

संसर्गपापिनस्ते वै पञ्चमाः परिकीर्तिताः ।
पञ्चपातकतुल्यानि पापानि प्रथितानि वै ।। २७
मयोक्तानि समासेन बहूक्त्या किं फलं मुने ।
एतानि सर्वपापानि संक्रमस्नानमात्रतः ।। २८
अमास्नानेन च ब्रह्मन्नश्यन्ते नात्र संशयः ।
सूर्योदये तमांसीव वह्निना तूलराशिवत् ।। २९
तस्मात्सर्वाघ शान्त्यर्थममायां संक्रमेऽपि च ।
कुर्वन्ति मनुजा गुप्तगङ्गास्नानं पदे पदे ।। ३०
सर्वेषामेव पापानां निष्कृतिः कथिता बुधैः ।
सर्वेष्वपि च शास्त्रेषु कृतघ्ने नास्ति निष्कृतिः ।। ३१
किञ्चिदाश्चर्यमधुना तव वक्ष्यामि सांप्रतम् ।
कृतघ्नोऽपि विमुक्तोऽभूद्गुप्तगङ्गानिमज्जनात् ।। ३२
मकरे संक्रमे मत्तःसुयज्ञ शृणु सादरम् ।
अस्मिन्नर्थे पुरावृत्तं संवादं व्यासपैलयोः ।। ३३
पृच्छते प्राह वै व्यासः पैलाय मुनिपुङ्गवः ।
मधुरायां पुरा कश्चित् द्विजो हंसाह्वयो मुने ।। ३४
जन्मप्रभृति दुश्शीलः परहिंसापरायणः ।
मातरं पितरं नित्यं पादघातेन तर्जति ।। ३५
तलेन मुष्टिबंधेन प्रहरत्यनिशं द्विषन् ।
बाधां तस्यासहमानौ पितरौ बंधुभिस्सह ।। ३६
पुत्रं तत्यजतुस्सोऽपि त्यक्त्वा तु पितरौ ततः ।
निर्गत्य सहसा देशाद्देशं गत्वा वनाद्वनम् ।। ३७
कुत्रचिच्छबरग्रामं गत्वा शबरकन्यकाम् ।
कल्पयित्वा स्वभार्यार्थे स्थित्वा शबरवेश्मनि ।। ३८

चिरं मांसानि मद्यानि भुक्त्वा शबरकन्यया ॥ ३९
रमित्वा सुचिरं कालं कृतवान् ब्राह्मणाधमः ।
तस्यैवं वर्तमानस्य कदाचिद्दैवयोगतः ॥ ४०

तद्देशेऽभूदनावृष्टिस्तेन क्षामोऽभवत्तदा ।
दुर्भिक्ष पीडया हंसः पीडितो नितरां तदा ॥ ४१

कुटुंबरक्षणा सक्तचित्तः स्वीयनिवेशनात् ।
द्रव्यार्जनाय निर्गत्य देशान्तरमगान्मुने ॥ ४२

तत्रापि क्षामबाहुल्यादन्नं कुत्रापि नाप्तवान् ।
अन्नाभावाद्भृशं दीनस्तापितो जाठराग्निना ॥ ४३

मूर्छितः कुत्रचिद्वृक्षमूले शेते द्विजाधमः ।
निराशो जीविते तत्र स्मृत्वा पुत्रान् स्त्रियं तथा ॥ ४४

रुदित्वा बहुशो दीनो मूर्च्छया ह्यवशोऽभवत् ।
तत्र तीर्थार्थिनः केचिद्ब्राह्मणाः ब्रह्मवादिनः ॥ ४५

सकुटुंबास्साग्निहोत्राः सभृत्य गणबांधवाः ।
स्नातुं मकर संक्रांतिमारभ्यामासमादृताः ॥ ४६

प्रति श्रीवाञ्छ्यनगरं भुक्ति मुक्ति प्रदं नृणाम् ।
समागताश्च तं देशं यत्र देशे द्विजाधमः ॥ ४७

ते दृष्ट्वा वृक्षमूले तं शयानं भूसुराधमम् ।
मुमूर्षुं क्षुत्पिपासाभ्यां भूसुरा ह्यार्द्र चेतसः ॥ ४८

स्वकीयजलपात्रस्थजलैस्तं सिषिचुर्मुदा ।
ततस्तून्मील्य नयनं दृष्ट्वा तान्भूसुरोत्तमान् ॥ ४९

करेणैव ययाचेऽन्नं जलं चादाय तत्र वै ।
तेर्दत्तमन्नं पानीयं भुक्त्वा पीत्वा गतक्लमः ॥ ५०

समुत्थाय द्विजान्नत्वा भवद्भिरधुना त्वहम् ।
पुनर्जातोऽस्मि भद्रं वो भूयात्किं करवाण्यहम् ॥ ५१

नियोजयत मां यूयं युष्माकं किङ्करोऽस्म्यहम् ।
गम्यते कुत्र युष्माभिः कस्माद्देशाद्वदन्तु नः ॥ ५२

ब्राह्मणाः–
अस्मिन्मकरसंक्रान्तौ श्री वाञ्छ्ये भुक्तिमुक्तिदे ।
मज्जनं गुप्तगङ्गायां कर्तुं गच्छामहे वयम् ॥ ५३
तत्र मज्जनमात्रेण महापातककोटयः ।
जन्मान्तरीया नश्यन्ति नात्र सन्देहकारणम् ॥ ५४
मज्जनं जनिमारभ्य कृतमामरणान्तिकम् ।
पापं नाशयति क्षिप्रं जनानां नास्ति संशयः ॥ ५५
तदर्थं गम्यतेऽस्माभिः श्री वाञ्छ्यं प्रति भूसुर ।
त्वया कर्तव्यमस्माकं नास्ति किञ्चिदपि द्विज ॥ ५६
तद्गच्छ भवतो यत्र रमते मानसं सुखम् ।
एवमुक्तस्स हंसस्तैस्तेषां दृष्ट्वा श्रियं मुने ॥ ५७
चिन्तयामास मनसि किं कर्तव्यं मयाऽधुना ।
एते तीर्थार्थिनस्सर्वे पूर्णकामास्समागताः ॥ ५८
मदर्थमेव विधिना प्रेषिता ब्राह्मणा अमी ।
कर्मणा केन वा ह्येते विश्वसन्ति महीसुराः ॥ ५९
तादृक्कर्म तथा कृत्वा विश्वस्तेषु जनेष्वहम् ।
रन्ध्रकालं प्रतीक्ष्यैव तेषां द्रव्यमशेषतः ॥ ६०
गृहीत्वा स्वगृहं यास्य इति निश्चित्य पापधीः ।
ततस्संछन्नहृदयः पुनस्तानब्रवीदहो ॥ ६१
भो भो तीर्थार्थिनो यूयं दयावन्तो महाधनाः ।
युष्माभिस्सह यास्यामि स्नातुं श्री वाञ्छ्यभूतलम् ॥ ६२
मह्यं दत्वा भुक्तमात्रं भरध्वं मामतन्द्रिताः ।
वहामि भारान्युष्माकं नियुङ्ध्वं मां द्विजोत्तमाः ॥ ६३

ओमित्युक्त्वाथ ते सर्वे वाहकर्मण्ययोजयन् ।
ततस्तेनैव ते सर्वे गत्वा श्री गन्धकाननम् ॥ ६४
श्री वाञ्छ्येशं नमस्कृत्य श्री भूकैलासनायिकाम् ।
क्षेत्रोपवासं ते सर्वे कृत्वा वपनपूर्वकम् ॥ ६५
तत्रोषित्वा निशामेकां परेद्युः प्रातरेव ते ।
निर्वृत्य नित्यकर्माणि स्नातुं मकरसंक्रमे ॥ ६६
कालप्रतीक्षणं कृत्वा चिन्तां चक्रुस्ततः परम् ।
केनचिद्रक्षकेणेह भाव्यं नो वस्तुरक्षणे ॥ ६७
इति संचिन्त्य तं हंसमब्रुवन् तीर्थवासिनः ।
हंसमाहूय ते सर्वे प्राब्रुवन् तीर्थवासिनः ॥ ६८
हंस त्वं प्रथमं गत्वा स्नात्वाऽगच्छ त्वरान्वितः ।
एवमुक्तस्ततो हंसो गत्वा श्री गुप्तजाह्नवीम् ॥ ६९
माकरे संक्रमे काले मौसलस्नानमाचरत् ।
स्नात्वा समागतं तं तु निकटं प्राब्रुवंश्च ते ॥ ७०
अस्मदीयानि वस्तूनि ह्यस्मदागमनावधि ।
भवान् रक्षतु सम्यक्त्वां वयं विश्वसिता भृशम् ॥ ७१
इत्युक्त्वा तेषु गच्छत्सु स्नानार्थं ब्राह्मणेषु सः ।
बन्धनानि तदीयानि शोधित्वा ब्राह्मणाधमः ॥ ७२
आदाय तेषां सर्वस्वं स्वदेशं प्रति निर्गतः ।
पापिष्ठानां कृतघ्नानां वञ्चकानां दुरात्मनाम् ॥ ७३
अभीष्टसिद्ध्यै भगवाननुकूलः कथं भवेत् ।
तेषामदृष्टबाहुल्याद्दुरदृष्टाद्दुरात्मनः ॥ ७४
आधावत्पुरतस्तेषां मार्गबुद्ध्या भ्रमान्वितः ।
आधावमानं तं दृष्ट्वा बलात्सङ्गृह्य तस्करम् ॥ ७५

स्वीयानि सर्वद्रव्याणि गृहीत्वा ते दयान्विताः ।
ब्राह्मणो नाभिहन्तव्यो हीनकर्मरतोऽपि वा ।। ७६

ब्राह्मणावज्ञयाऽस्माकं न भूयात्पापमण्वपि ।
आक्रोशपरिवादादीन् ये वदन्ति द्विजातिषु ।। ७७

तान्मृतान् यमलोकस्थान् निपात्य पृथिवीतले ।
आक्रम्योरसि पादेन क्रूरस्संरक्तलोचनः ।। ७८

अग्निवर्णैस्तु सन्दंशैर्यमो जिह्वां समुद्धरेत् ।
यः प्रहारं द्विजेन्द्राय दद्यात्कुर्याच्च शोणितम् ।। ७९

अस्थिभङ्गं च यः कुर्यात् प्राणैर्वा विप्रयोजयेत् ।
सोऽनुपूर्वेण याति स्म नरकानेकविंशतिम् ।। ८०

उत्पाद्य शोणितं गात्रात्संरम्भाद्बुद्धिपूर्वकम् ।
स पर्यायेण याति स्म नरकानेकविंशतिम् ।। ८१

तस्मान्नाकुशलं कुर्यान्नाशुभां गिरमीरयेत् ।
एवं ज्ञात्वा ब्राह्मणानां महिमानं महीसुराः ।। ८२

दृष्टचौर्यं कृतघ्नं च बाधेरन्पुरपालकाः ।
तं गृहीत्वा तदा बध्वा प्राहरन्भयविह्वलम् ।। ८३

तैः प्रहारैर्धुनोति स्म गतासुरिव सोऽपतत् ।
मृतोऽयमिति तं विप्रं विसृज्य पुरपालकाः ।। ८४

ययुः पश्चात्समुत्थाय हंसाख्यो ब्राह्मणाधमः ।
मन्दं मन्दं ययौ स्वस्य निलयं प्रति वञ्चकः ।। ८५

प्रयातस्य कृतघ्नस्य चरमः काल आगतः ।
मार्गमध्येऽतिसारेण पञ्चत्वमगमत्ततः ।। ८६

तदैव यमदूतास्तं बध्वा पाशैर्दृढं बुधाः ।
गन्तुं यमस्य निलयं प्राहरन् ब्राह्मणाधमम् ।। ८७

तावदागत्य सहसा शिवदूताश्शिवाज्ञया ।
विमुच्य बन्धनाद्धंसं विमाने सूर्यसन्निभे ।। ८८
अप्सरोभिः परिवृते किन्नरीभिस्समावृते ।
आरोप्य त्वरया गत्वा प्राक्रमंस्ते भटोत्तमाः ।। ९०
ज्ञातुं हंसस्य सुकृतमिच्छामो ब्रूत किं गणाः ।
इति याम्यैर्गणैः पृष्टाः प्राब्रुवन् शिवकिङ्कराः ।। ९१
हंसस्य चरितं यत्तच्छृण्वन्तु यमदूतकाः ।
जन्मप्रभृति पापिष्ठः परहिंसापरायणः ।। ९२
शूद्रामेव स्वभार्यार्थे कल्पयित्वा द्विजाधमः ।
शूद्राचाररतो नित्यं शूद्रवीथ्यां चरन्वसन् ।। ९३
अन्नपानादिकं सर्वं तया भुक्त्वा शवर्यया ।
तस्यामुत्पाद्य तनयान् गत्वा देशान्तरं ततः ।। ९४
कृतघ्नतामपि प्राप्य पश्चात्पञ्चत्वमागतः ।
यमदूताः–
यातव्योऽयमतोऽस्माभिर्युष्माभिर्नीयते कथम् । ९५
अनेनाकारि किं पुण्यमणुमात्रं भवेद्यदि ।
ब्रूत तत्वेन तच्छ्रुत्वा निवृत्तास्स्मो यथासुखम् ।। ९६
एवमुक्ताः शिवगणाः प्रत्यूचुर्यमकिङ्करान् ।
हंसस्य चरितं ब्रूमः शृण्वन्तु यमकिङ्कराः ।। ९७
श्री चन्दनवनारण्ये श्री भूकैलाससंज्ञिके ।
श्री चन्दनवनाधीश श्री वाञ्छ्येशस्य चोत्तरे ।। ९८
वर्तते गुप्तगङ्गेति तीर्थं त्रैलोक्यविश्रुतम् ।
तस्मिन्मकरसङ्क्रान्तौ मज्जनं कृतवानयम् ।। ९९
व्याजेनापि कृतेनाद्य प्राप्यते शिवमन्दिरम् ।
ज्ञात्वा तीर्थस्य माहात्म्यं मतिपूर्वं कृते सति ।। १००

मुक्तिस्तस्य करस्थैव किमु पापस्य मोक्षणे ।
अतः कृतघ्नतायान्तु मुक्तोऽभूद्धंसनामकः ।। १०२
तस्मादस्माभिरधुना नीयते शिवमन्दिरम् ।
इत्युक्त्वा तेन सह ते शिवलोकं प्रपेदिरे ।। १०२
ततो यमभटास्सर्वे हंसस्य चरितं महत् ।
श्रुत्वापि तीर्थमाहात्म्यं मुक्त्वापुर्मृत्युसन्निधिम् ।। १०३
एवं मकरसङ्क्रान्तिं वै भवताऽनु प्रकीर्तितम् ।
अयने विषुवे चैव सङ्क्रान्तौ ग्रहणेऽपि वा ।। १०४
अमायां गुप्तगङ्गायां ये स्नान्ति मनुजा भुवि ।
जन्मारभ्य कृतैः पापैर्न लिप्यन्ते न संशयः ।। १०५
ये च सङ्क्रान्तिमाहात्म्यं शृण्वन्ति च पठन्ति च ।
ते वै पातकसङ्घेभ्यो मुक्तिमेष्यन्ति तद् ध्रुवम् ।। १०६

इति श्री सांबोपपुराणे श्रीवाञ्छ्यमाहात्म्ये सप्तदशोऽध्यायः

## ।। द्वात्रिंशोऽध्यायः ।।

सुयज्ञ :-
अमायां गुप्तगङ्गायां मनुष्याणां विशेषतः ।
स्नानेन किं भवेत् ब्रूहि फलं यन्मे महामुने ।। १

साम्बः-
तथैव ते प्रवक्ष्यामि शृणुष्वैकमना भवान् ।
आश्रमेषु यथोक्तेषु यथोक्तं न द्विजातयः ।। २
वर्तन्ते संशयात्मानस्ते वै सूर्येन्दुसङ्गमे ।
स्नात्वा तु गुप्तगङ्गायां शुद्धास्स्वर्गं व्रजन्ति हि ।। ३
ये वै हिंसन्ति भूतानि कर्मणा मनसा गिरा ।
नृशंसाः प्रयतात्मानस्ते वै सूर्येन्दुसङ्गमे ।। ४

स्नात्वा तु गुप्तगङ्गायां शुद्धास्स्वर्गं व्रजन्ति हि ।
येऽग्निहोत्ररता न स्युर्नित्यं नातिथिपूजकाः ॥ ५
नित्यं स्वाध्यायहीनाश्च ते वै सूर्येन्दुसङ्गमे ।
स्नात्वा तु गुप्तगङ्गायां शुद्धास्स्वर्गं व्रजन्ति हि ॥ ६
ये परानवजानन्ति ये च स्वान्मानयन्ति च ।
व्यथयन्ति च ये चान्यान् ते वै सूर्येन्दुसङ्गमे ।
स्नात्वा तु गुप्तगङ्गायां शुद्धाः स्वर्गं व्रजन्ति हि ॥ ७
ये वासुदेवं नार्चन्ति कर्मणा मनसा गिरा ।
सदाशिवं च भूदेवान् ते वै सूर्येन्दुसङ्गमे ।
स्नात्वा तु गुप्तगङ्गायां शुद्धाः स्वर्गं व्रजन्ति हि ॥ ८
धर्मार्थं जीवितं तेषां न पुत्रार्थं च मैथुनम् ।
भोजनं वै न यात्रार्थं ते वै सूर्येन्दु सङ्गमे ।
स्नात्वा तु गुप्त गङ्गायां शुद्धाः स्वर्गं व्रजन्ति हि ॥ ९
मातृवत् स्वसृवच्चापि तथा दुहितृवच्च ये ।
परदारेषु वर्तन्ते ते वै सूर्येन्दुसङ्गमे ।
स्नात्वा तु गुप्त गङ्गायां शुद्धाः स्वर्गं व्रजन्ति हि ॥ १०
ये त्वसंशान्तरजसो ये त्वसंशान्तमानसाः ।
सत्वेनावस्थितात्मानस्ते वै सूर्येन्दुसङ्गमे ।
स्नात्वा तु गुप्त गङ्गायां शुद्धाः स्वर्गं व्रजन्ति ते ॥ ११
येऽधिक्षिप्ताः प्रकुप्यन्ति हिंसन्त्यपि च हिंसिताः ।
नोत्तिष्ठन्ति द्विजा ब्रह्म चिन्तयन्ति न चात्मनः ॥ १२
स्नात्वा तु गुप्त गङ्गायां शुद्धाः स्वर्गं व्रजन्ति हि ।
काले मूत्र पुरीषं च नोत्सृजन्ति यथोक्ततः ।
अनिषिद्धदिने दन्तधावनं नाचरन्ति ये ॥ १३

तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
ये तु नित्यमुषः काले स्नानं देवर्षितर्पणम् ॥ १४
न कुर्वन्ति त्रिपुण्ड्रेण विना सन्ध्यां च मोहतः ।
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ॥ १५
प्रातस्सन्ध्यां सनक्षत्रां नानुतिष्ठन्ति ये द्विजाः ।
न पश्चिमां तथा सन्ध्यामर्द्धास्तमितभास्कराम् ॥ १६
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
औपासनमकुर्वाणास्सायं प्रातर्यथाविधि ॥ १७
दर्शे च पौर्णमास्यां च स्थालीपाकं च ये द्विजाः ।
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ॥ १८
ये च स्वाध्याय विमुखा ब्रह्मयज्ञपराङ्मुखाः ।
मध्याह्नस्नानरहिता माध्याह्निकपराङ्मुखाः ॥ १९
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरम् ॥ २०
न पूजयन्ति प्रत्येकं नित्यं ये ब्राह्मणाधमाः ।
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ॥ २१
औपासनाग्नावन्नेन सायं प्रातर्द्विजातयः ।
वैश्वदेवं न कुर्वन्ति न चातिथ्यं च कालयोः ॥ २२
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
ये वाग्यता न चाश्नन्ति न स्पृशन्ति च भाजनम् ॥ २३
न पृथक्कुर्वते ये च प्राणाहुत्यादि पञ्चकम् ।
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ॥ २४
नानुतिष्ठन्ति कर्माणि नित्यनैमित्तिकानि ये ।
एकवस्त्रास्त्रिपुण्ड्रेण विना तेऽपि महामुने ॥ २५

तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
अतिथ्यभ्यागतानां तु रजन्यां ये विशेषतः ॥ २६
प्रतिश्रयं न यच्छन्ति नान्नं तोयं च ये जनाः ।
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ॥ २७
पञ्चदश्यां चतुर्दश्यामष्टम्यां च त्रिजन्मसु ।
स्वभार्यागमनं मोहाद्ये कुर्वन्ति दिवि द्विजाः ॥ २८
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
अर्कशक्रगुरुक्ष्माजवारेष्वभ्यञ्जनं मुने ॥ २९
न वर्जयन्ति ये मूढा नीरोगा अपि मानवाः ।
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ॥ ३०
अनधीत्य द्विजा वेदान् स्नान्ति ये वै गुरोरपि ।
अनुज्ञां च विना चीर्णव्रतास्तेऽपि महामुने ॥ ३१
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
अधिकामात्मनो भार्यामरूपामप्यलक्षणाम् ॥ ३२
समानगोत्रां स्वस्यैव पाणिं गृह्णन्ति ये नराः ॥ ३३
क्षत्र विट्शूद्रपतितात्कृतघ्नादन्त्यजादपि ।
प्रतिगृह्णन्ति ये रत्नं धनं धान्यं च गामपि ॥ ३४
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
प्रवदन्ति मनुष्याणां प्रमादमनृतं तथा ॥ ३५
असह्यमहितं क्रौर्यं पैशुन्य पौरुषं च ये ।
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ॥ ३६
आलिङ्गनं च दम्पत्योर्विण्मूत्राणां च सर्जनम् ।
मैथुनं चापरेषां ये पश्यन्ति विगतासरान् ॥ ३७
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
पुष्पिणीमुखमीक्षन्ते ये वै प्रेतमुखं तथा ॥ ३८

प्रसूतिकामुखं तद्वदुन्मत्ताया मुखं तथा ।
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ॥ ३९

ये भुञ्जते स्वभार्याभिः पुत्रैरपि च पौत्रकैः ।
मातृष्वस्रा पितृष्वस्रा तदपत्यैश्च मातुलैः ॥ ४०

तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
पादैः पिंषति ये मोहात् क्रुद्धास्तैर्मारयन्ति च ॥ ४१

तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
उप्त्वा बीजन्तु संवर्ध्य विषवृक्षानपि स्वयम् ॥ ४२

छिन्दन्ति ये महामूढाः फलपुष्पयुतान् द्रुमान् ।
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ॥ ४३

अध्यापयन्ति शूद्रेभ्यो ज्ञानं वेदमुखैः सकृत् ।
स्त्रीणामपि च वेदान्ते वाक्यार्थं च वदन्ति ये ॥ ४४

आत्मजानपि पत्नीं च द्रव्ये सत्यपि लोभकः ।
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ॥ ४५

अप्सु तिष्ठंति ये नग्नाः पिबन्त्यञ्जलिना जलम् ।
तटाके सति कूपे वा पान्त्यजस्रं नराधमाः ॥ ४६

तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
अस्नात्वा भुंजते ये वै देवार्चां च न कुर्वते ॥ ४७

न प्रयच्छंति भिक्षां ये यतये वटवे मुने ।
संध्ययोस्स्वापनं ये वै मैथुनं गमनं तथा ॥ ४८

भोजनाध्यापनं चैव कुर्वते ब्राह्मणाधमाः ।
तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ॥ ४९

अयोनावप्सु वान्यासु रतस्तिर्यक्षु मोहतः ।
उत्सृजन्त्यथवा रागात्पिबंति च नराधमाः ॥ ५०

तेऽमायां गुप्तगङ्गायां स्नात्वा शुद्धा भवन्ति हि ।
कन्यां गते सवितरि येऽमायां स्नान्ति मानवाः ॥ ५१

गुप्तगङ्गाजले तेषां षण्मासस्नानजं फलम् ।
मकरस्थे दिवानाथे येऽमायां स्नांति मानवाः ॥ ५२

एकाब्दामास्नानफलं तेषां भवति निश्चितम् ।
कुलीरदर्शस्नाने स्यादमास्नानचतुर्गुणम् ॥ ५३

सोम भौमगुरुभिर्दिनैर्युता यद्यमा पितृ विमुक्तिदा तदा ।
सा सहस्ररविग्रहणैस्समा पौष्कलेति परि कीर्तिता बुधैः ॥
५४

अस्याममायां गुप्तायां गङ्गायां स्वपितॄनपि ।
तिलोदकप्रदातारस्ते गया श्राद्धदा नराः ॥ ५५

ये दर्शे गुप्तगङ्गायास्तीरे श्राद्धं प्रकुर्वते ।
गयाश्राद्धाच्छतगुणं श्राद्धदास्ते न संशयः ॥ ५६

एकामायां तर्पणेन पितरस्तस्य वंशजाः ।
दशवर्षाणि तृप्तास्स्युः द्वितीयेन समाश्शतम् ॥ ५७

तृतीयेन युगं तृप्तिस्तुर्येणाचन्द्रतारकम् ।
तस्मात्पि तॄणामक्षय्य तृप्त्यर्थं मानवैर्भुवि ॥ ५७

अमायां गुप्तगङ्गायां कर्तव्यं तिलतर्पणम् ।
ये श्राद्धं तत्र कुर्वंति पितॄनुद्दिश्य मानवाः ॥ ५९

गयायामक्षय वटच्छायायां श्राद्धदो भवेत् ।
तस्माच्छ्राद्धं तत्र कार्यं पितॄणां तृप्तिहेतवे ॥ ६०

अमास्नानफलं सर्वं मयाऽवादि तवाधुना ।
पुनश्शुश्रूषसे किं वा मां पृच्छ त्वं वदामि ते ॥ ६१

इति सांबोपपुराणे श्री वाञ्छ्यमहात्म्ये अष्टादशोऽध्यायः ॥



## ॥ त्रयस्त्रिंशोऽध्यायः ॥

सुयज्ञः-

वद सांब महायोगिन्नर्धोदयमहोदयौ ।
लक्षणं च विधानं च स्नानस्य च फलं तयोः ॥ १

साम्बः—

अमार्कपातश्रवणैः युक्ता चेत्पौषमाघयोः ।
अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥ २
माघाद्यमा व्यतीपातश्रवणैर्यदि सम्भवेत् ।
सोमवारस्य संयोगस्स महोदय उच्यते ॥ ३
यस्मिन् दिने महायोगो भविष्यति महामुने ।
तस्य पूर्वदिने गत्वा श्रीवाञ्छ्ये भुक्ति मुक्तिदे ॥ ४
क्षेत्रोपवासं विधिवत्कृत्वा वपन पूर्वकम् ।
त्रियामान्ते समुत्थाय बाह्यशौचपुरस्सरम् ॥ ५
स्नात्वा संध्यादिकं सर्वं कृत्वा कालं प्रतीक्षयेत् ।
सर्षपं दधि गंधं च क्षीरं पुष्पं कुशं जलम् ॥ ६
अक्षतं चार्घ्यदानाय संगृह्यार्धोदये रवेः ।
स्नायात्सर्वाघशान्त्यर्थं गुप्तगङ्गांभसि स्वयम् ॥ ७
स्नात्वाऽनन्तरमेतेषां विष्ण्वादीनां पृथक्पृथक् ।
अष्टद्रव्येण संयुक्तमर्घ्यं दद्यात्समन्त्रकम् ॥ ८
भानुविष्णु विधूनां च व्यतीपातेन्दुचूडयोः ।
दत्वार्घ्याणि तत स्तेषां नमस्कुर्याच्च तान् प्रति ॥ ९

अर्घ्यमंत्रः-

दिननाथ नमस्तेऽस्तु तेजोमूर्ते जगत् प्रभो ।
मया दत्तं गृहाणार्घ्यमष्टद्रव्येण शोभितम् ॥ १०

श्रवणाधिपते देव नमस्तुभ्यं जनार्दन ।
गृहाणार्घ्यं मया दत्तं लक्ष्मीजाने नमोस्तु ते ।। ११
अत्रिलोचनसम्भूत ह्यब्धिजासोदराधुना ।
अर्घ्यं गृहाण भगवन् सुधापूर्ण नमोऽस्तु ते ।। १२
सुधाकर नमस्तुभ्यं कीलालकिरणाधुना ।
यन्मया तु कृतं पुण्यं तत्सर्वं चाक्षयं कुरु ।। १३
सहस्र बाहो सर्वात्मन् व्यतीपात महाघहन् ।
गृहाणार्घ्यं मया दत्तं योगराज नमोऽस्तु ते ।। १४
तिथितारकवाराणामधीश परमेश्वर ।
मासर्त्वयन कालेश गृहाणार्घ्यं नमोऽस्तु ते ।। १५
दत्वार्घ्याणि क्रमेणैवं नमस्कुर्याच्च तान् प्रति ।
मन्त्रैरेतैः पुनश्चान्ते प्रार्थयेत्पञ्च देवताः ।। १६
जगदीश दिनाधीश कालाधीश कृपाम्बुधे ।
तव पादाम्बुजद्वंद्वे निश्चला भक्तिरस्तु मे ।। १७
तारकाणामधीशान सुराणां च सुधाप्रद ।
मां त्राहि रोहिणीकान्त कलापूर्ण नमोऽस्तु ते ।। १८
श्रवणर्क्षपते विष्णो लक्ष्मीजाने तवाधुना ।
यन्मया विहितं किञ्चित्तदक्षय्यमिहास्तु ते ।। १९
अर्थिनां कल्पवृक्षोऽसि कालकामविनाशन ।
मासवत्सरकालेश पापं नाशय मे शिव ।। २०
एवं कृते तु तत्पश्चाद्दानं कुर्याद्यथाविधि ।
सुवर्णं पायसं कांस्यं दद्याद्वेदविदि द्विजे ।। २१
दानमन्त्रः-
सुवर्णं कांस्यपात्रं च परमान्नेन संयुतम् ।
पापान्मस्तारकं यस्मात्तं गृहाण द्विजोत्तम ।। २२

अमृतं सर्वदेवानां मर्त्यानां शिवमुत्तमम् ।
ब्रह्माभिन्नं च यत्तस्मादेतदस्तु सुखाय मे ।। २३
स्वर्णं पवित्रममलं स्वर्णं पापविनाशनम् ।
स्वर्णं हितकरं यस्मादस्तु मे शंकरं सदा ।। २४
एवं दत्वा द्विजेन्द्राय श्रोत्रियाय कुटुंबिने ।
प्रार्थयेच्च दिवानाथं निशानाथं च भक्तितः ।। २५
पुष्टिं मेधां बलारोग्यं संपदारोग्य वर्द्धनम् ।
त्रयीमय द्विज त्वं हि देहि मे पुण्य वर्द्धनम् ।। २६
त्रयीमय नमस्तुभ्यं देवदेव दिवाकर ।
पुरा कृतं च यत्पुण्यं तत्सर्वं चाभयं कुरु ।। २७
सुधाकर नमस्तुभ्यं देवदेव निशाकर ।
पुरा कृतं च यत्पुण्यं तत्सर्वं चाक्षयं कुरु ।। २८
मयैवमभ्यधाय्यद्य त्वर्धोदयमहोदययोः ।
विधानं गुप्तगङ्गायां स्नातुं श्री वाञ्छ्य भूतले ।। २९
एवं यः कुरुते स्नानमर्धोदयमहोदययोः ।
योगस्सूर्योपरागाणां सहस्र फल भाग्भवेत् ।। ३०
इहाप्य सकलान् कामानन्ते शिवपुरं व्रजेत् ।
चन्द्रसूर्योपरागेऽपि श्री वाञ्छ्ये भुक्तिमुक्तिदे ।। ३१
गुप्तगङ्गाजले स्नांति ते मुच्यन्तेऽघसंचयात् ।
स्नानाद्वै पापशान्तिश्च स्वर्गमोक्षेऽपि चात्मनः ।। ३२
वाञ्छन्ति गुप्तगङ्गायां स्नातुं तत्रोपरागयोः ।
यस्य त्रिजन्मनक्षत्रे ग्रसितौ शशिभास्करौ ।। ३३
राहुणा केतुना वापि तस्य मृत्युर्भवेद्ध्रुवम् ।
दुरितं वा प्रवासं वा व्याधिर्वाऽथ महद्भयम् ।। ३४

भविष्यत्येव सन्देहो नास्ति तद्दोषशान्तये ।
स्नातव्यं गुप्तगङ्गायां चन्द्रसूर्योपरागयोः ।। ३५

इति श्री सांबोपपुराणे श्री वाञ्छ्यमाहात्म्ये एकोनविंशोऽध्यायः

## ।। अथ चतुस्त्रिंशोऽध्यायः ।।

सांबः-

रविग्रहे कुरुक्षेत्रे स्नातानां यत् फलं भवेत् ।
तस्माच्छतगुणं प्रोक्तं गुप्तगङ्गाप्लवाद्भवेत् ।। १
तस्मात् स्नात्वा यथाशक्ति दद्यादेवोपरागयोः ।
श्रोत्रियेभ्यो दरिद्रेभ्यः क्षेत्र वासिभ्य एव च ।। २
अथवा जातिमात्रेभ्यो देयमात्महितैषिणा ।
कदाचित्कुत्रचिद्देशे कदाचित् कुत्रचित् स्थले ।। ३
कदाचित्कुत्रचिन्नद्यां कदाचिद्देवखातके ।
अब्धौ कदाचिद्वाप्यादौ तिथिवारर्क्षयोगतः ।। ४
पुण्यकालो भवेद्दैवात् प्राणिनां हितकाम्याया ।
अजस्रपुण्यकालैषा गुप्तगङ्गा महामुने ।। ५
पुनः पुण्येन किं ब्रह्मन् जानद्भिः पुरुषैः किमु ।
कुत्राप्यगत्वा कर्तव्यं पुण्यकालेषु सर्वथा ।। ६
गुप्तगङ्गांभसि स्नानं स्थित्वा तत्रैव मुक्तये ।
ये गुप्तगङ्गां हित्वैव तद्देशीयाश्च मानवाः ।। ७
यान्ति तीर्थान्तरं तेषां श्रम एव फलं भवेत् ।
यं यं तीर्थं समाश्रित्य ये वसन्ति द्विजादयः ।। ८
ते गुप्तगङ्गां गङ्गां च विहायान्यत्र न व्रजेत् ।
स्वाश्रितान्यपि तीर्थानि प्रविहायाथ मानवः ।। ९

गुप्तगङ्गां च गङ्गां च समुद्दिश्य व्रजेसुधीः ।
गुप्तगङ्गां च गङ्गां च न विहाय व्रजेत्सुधीः ॥ १०
यदि व्रजेत्स मूढात्मा रौरवं नरकं व्रजेत् ।
ज्ञात्वैतत्पुण्य कालेषु गुप्तगङ्गानिमज्जनम् ॥ ११
कुर्वन्तु सर्वदा मर्त्या भुक्तिमुक्त्यर्थमादरात् ।
बहूक्त्या किं मुनिश्रेष्ठ प्राणिनः कृतपापकाः ॥ १२
पश्चात्ताप समायुक्ता नरकक्लेशभीरवः ।
निष्कृत्यर्थं परे लोके सुखार्थं मुनिपुङ्गवाः ॥ १३
समाश्रयेयुः श्री वाञ्छ्यमन्त्यकाले विशेषतः ।
सुयज्ञः-
अन्त्यकालं कथं मर्त्यैर्ज्ञातुं शक्यं महामुने ॥ १४
तद्वदस्व मम ब्रह्मन् कृपा मय्यस्ति चेत्तव ।
सांबः-
अथैवैतत् प्रवक्ष्यामि शृणुष्वेकमना भवान् ॥ १५
प्रत्यक्षचिह्नैरपि च स्वप्नचिह्नैश्च पूरुषः ।
स्वात्मनोऽन्तं विदित्वैव श्रीभूकैलासमाश्रयेत् ॥ १६
यदा चन्द्र इवादित्य ईक्ष्यते रश्मिभिर्विना ।
तदात्मनोऽन्तं विज्ञाय श्री भूकैलासमाश्रयेत् ॥ १७
लोहिती द्यौर्यदा भाति मञ्जिष्ठाकारवद् भृशम् ।
तदात्मनोऽन्तं विज्ञाय श्री भूकैलासमाश्रयेत् ॥ १८
यदा काककुलायस्य ग्रंथिः शिरसि चेत्पतेत् ।
तदात्मनोऽन्तं विज्ञाय श्रीभूकैलासमाश्रयेत् ॥ १९
यदा छिद्र इवादित्यः स्वच्छायां वाऽथ दृश्यते ।
तदात्मनोऽन्तं विज्ञाय श्रीभूकैलासमाश्रयेत् ॥ २०

यदा मयूरग्रीवेव वह्निं पश्यति यो नरः ।
तदा विदित्वा स्वस्यान्त कालं श्री वाञ्छ्यमाश्रयेत् ॥ २१
भूमिं ज्वलन्तीं च यदा वीक्षते मनुजो मुने ।
तदा विदित्वा स्वस्यान्त्यकालं श्री वाञ्छ्यमाश्रयेत् ॥ २२
श्रोत्रे पिधाय निश्शब्दं यो जानाति सदाऽऽत्मनः ।
तदा श्री वाञ्छ्य नगरीमाश्रयेच्छ्रेयसे मुदा ॥ २३
आदर्शे स्वात्मनः शीर्षं जले वा न च पश्यति ।
तदा श्रीवाञ्छ्यनगरी माश्रयेच्छ्रेयसे मुदा ॥ २४
यदाऽदर्शे जलेवाऽपि जिह्मं शीर्षं प्रपश्यति ।
तदा श्रीवाञ्छ्यनगरी माश्रयेच्छ्रद्धया मुदा ॥ २५
यदा मयूरग्रीवेव मेघे पश्यति विद्युतम् ।
तदैव चन्दनारण्यमाश्रयेद्भुक्तिमुक्तिदम् ॥ २६
यदा सौदामिनीं मेघे न पश्यति यथा पुरा ।
तदा श्री चन्दनारण्यमाश्रयेत्सर्वसिद्धिदम् ॥ २७
प्रत्यक्षमृतिचिह्नानि मयोक्तान्यधुना पुनः ।
स्वप्नेनैव च चिह्नानि प्रवक्ष्याम्यधुना शृणु ॥ २८
यस्स्वप्ने वीक्षते कृष्णदन्तं कृष्णं च पूरुषम् ।
तदा श्री चन्दनारण्यमाश्रयेत्सर्वकामदम् ॥ २९
आस्कन्दयन्तमात्मानं स्वप्ने पश्यति मर्कटैः ।
तदा श्रीचन्दनारण्यमाश्रयेत्सर्वसिद्धिदम् ॥ ३०
स्वप्ने पश्यति चात्मानं वहन्तं चण्डमारुतैः ।
तदा श्रीचन्दनारण्यमाश्रयेत्सर्वसिद्धिदम् ॥ ३१
यस्सुवर्णं तु खादित्वा स्वप्ने च किरति स्वयम् ।
तदाऽऽत्मानं मृतं ज्ञात्वा श्रीगन्धवनमाश्रयेत् ॥ ३२

मध्वश्नाति यदा स्वप्ने बिसान्यपि च यो नरः ।
तदाऽऽत्मानं मृतं ज्ञात्वा श्रीगन्धवनमाश्रयेत् ।। ३३
कालयुक्तेन यानेन यान्तं स्वात्मानमाकुलम् ।
यदा पश्यति यस्स्वप्ने तदा श्री वाञ्छ्यमाश्रयेत् ।। ३४
यो व्याजयति कृष्णां गां कृष्णवत्सां च मानुषः ।
स्वयं नलदमाली च दक्षिणाभिमुखो वसन् ।। ३५
स्वप्ने पश्यति यश्शीघ्रं व्रजेच्छ्रीवाञ्छ्य भूतलम् ।
एवं प्रत्यक्षचिह्नैश्च स्वप्नचिह्नैश्च मानवः ।। ३६
अचिरेणैव कालेन स्वस्य पञ्चत्वमात्मनः ।
विनिश्चित्य व्रजेच्छ्रीभूकैलासं सर्वकामदम् ।। ३७
उक्तं तव द्विजश्रेष्ठ अन्त्यकालस्य लक्षणं ।
एतानि मृति चिह्नानि ज्ञात्वा द्रुतमतन्द्रितः ।। ३८
गत्वा श्री वाञ्छ्यनगरमादेहपतनावधि ।
स्थित्वा पुण्यानि कर्माणि स्नानदानव्रतानि च ।। ३९
कृत्वा पञ्चत्व मापन्नो यदि तत्र नरो मुने ।
तदा विधूय पापानि जीर्णां त्वचमिवोरगः ।। ४०
शिवलोकमवाप्नोति पुनरावृत्तिवर्जितम् ।
य एतच्छृणुयान्नित्यं मृतिलक्षणमादरात् ।। ४१
स सर्वपापनिर्मुक्तः शिवलोके वसेच्चिरम् ।। ४२

इति श्री सांबोपपुराणे श्री वाञ्छ्यमाहात्म्ये विंशोऽध्यायः ।।

## ।। अथ पञ्चत्रिंशोध्यायः ।।

सुयज्ञः -

तत्र श्री वाञ्छ्य नगरे पुण्यकाले विशेषतः ।
कीदृशेभ्यो ब्राह्मणेभ्यो दानं देयं ब्रवीहि मे ।। १

पात्राणां तारतम्यन्तु मया ज्ञातव्यमेव हि ॥
सांबः-
श्रोत्रियेभ्योऽथवा विप्रब्रुवेभ्यो वा महामते ॥ २
विप्रनामधरेभ्यो वा दद्यादब्राह्मणेऽपि वा ।
उत्तमं श्रोत्रिये दानं मध्यमं ब्राह्मणब्रुवे ॥ ३
द्विजनामधरे ब्रह्मन्नधमः परिकीर्तितः ।
अब्राह्मणस्त्रयाणान्तु जघन्यः परिकीर्तितः ॥ ४
श्रोत्रियब्राह्मणाभावे दातव्यं ब्राह्मणब्रुवे ।
अथ विप्रब्रुवाभावे विप्रनामधरेऽपि वा ॥ ५
विप्रनामधराभावे देयमब्राह्मणेऽपि वा ।
सुयज्ञः-
क्रमेण श्रोत्रियादीनां लक्षणानि पृथक्पृथक् ॥ ६
विस्तरेण मुनिश्रेष्ठ प्रब्रूहि मम सांप्रतम् ॥
सांबः-
शाखामधीते स प्रोक्तः श्रोत्रियः शास्त्र पारगैः ।
एकां स्वशाखां वाऽधीते श्रोत्रियेषु स उत्तमः ॥ ७
तादृशश्रोत्रियाभावे पुण्यकाले विशेषतः ।
विप्रब्रुवाय वा दद्यात् स्वस्य वित्तानुसारतः ॥ ८
अधीतवेदोऽ श्रोत्रियश्च गर्भाधानादि संस्कृतः ।
ब्राह्मणब्रुव इत्युक्तस्तल्लक्षणपरायणैः ॥ ९
गर्भाधानादि संस्कारवेदोपनयनैर्युतः ।
नाध्यापयति नाधीते सोऽपि च ब्राह्मणब्रुवः ॥ १०
तद्ब्राह्मणब्रुवाभावे पुण्यकाले विशेषतः ।
विप्रनामधरायैव दद्याल्लोभविवर्जितः ।

नामधारक इत्युक्तस्स विद्वद्भिर्मुने श्रुतम् ।। ११

गायत्रीमात्रसारा ये संध्यामात्रमुपाश्रिताः ।
अज्ञातकृषिकर्माणो ब्राह्मणा नामधारकाः ।। १२

विप्रनामधराभावे पुण्यकाले विशेषतः ।
अब्राह्मणा य वा दद्याद्वित्तलोभविवर्जितः ।। १३

अश्रोत्रियोऽपि द्विजनामधारको विप्रब्रुवो ब्राह्मणजातिजातः ।
अर्हंति सर्वेऽपि च पुण्यकाले श्री वाञ्छ्यभूमावितरत्र नैव ।। १४

पात्राणां तारतम्यं ते मया प्रावादि तत्त्वतः ।
इतः परं ते वक्तव्यमस्ति चेद्वद मां पुनः ।। १५

सुयज्ञः-
सर्वेष्वपि च दानेषु किं दानमधिकं स्मृतम् ।
केन सर्वाणि दानानि कृतान्येव भवेद्भुवि ।। १६

केन दानेन दारिद्र्यं पापान्यपि च नश्यति ।
केन दानेन भूलोके धराधीशो भवेद्ध्रुवम् ।
केन दानेन पितरः प्रीणंति मुनि पुङ्गव ।। १७

प्रीणंति केन दानेन ब्रह्मविष्णुमहेश्वराः ।
इन्द्रादिदेवतास्सर्वे ऋषयश्च तपोधनाः ।। १८

प्रीणन्ति केन दानेन नश्यन्ति व्याधयोऽपि च ।
केन वेदान्तविज्ञानसुनिश्चितमतिर्भवेत् ।। १९

केन दानेन संसारसमुद्रं तरति क्षणात् ।
केन दानेन धर्मेषु मतिर्भवति सर्वदा ।। २०

तद्दानं वद मे ब्रह्मन् तवान्तेवासिने मुने ।।

सांबः-
सर्वेषामपि दानानां भूमिदानं परं स्मृतम् ।। २१

सर्व पापहरं तद्धि स्वर्गायुष्यप्रदं नृणाम् ।

भूमिदानेन सर्वाणि कृतानि स्युर्न संशयः ॥ २२
तस्माद्भूमिप्रदो विद्वान्सर्वतः प्रोच्यते बुधैः ।
भूमिं सर्वगुणोपेतां यो दद्यात्सस्यमालिनीम् ॥ २३
न तस्य लोकाः क्षीयन्ते यावत्तिष्ठन्ति मेदिनी ।
यत्फलं भूमिदानेन प्राप्यते पुरुषेण तु ॥ २४
नाग्निष्टोमादिभिर्यज्ञैः प्राप्यते पूर्णदक्षिणैः ।
बहुश्रुतं च यज्वानं सत्यवन्तं तपस्विनम् ॥ २५
गुरुदेवपरश्चापि भूदोऽतिक्रामति ध्रुवम् ।
ये शूरास्स्वामिकार्यार्थे युध्यन्ते पृतनास्वसून् ॥ २६
त्यजन्ति भूमिदस्तानप्यतिक्रामति निश्चितम् ।
श्रुत्वा गाधां भूमिगीतां जामदग्न्यः पुरा महान् ॥ २७
महामना महीं प्रादात्काश्यपाय महात्मने ।
मम दाता न मामेति मां दाता मामुपैति हि ॥ २८
लोकद्वयहितार्थाय दद्यान्मामादरात्ततः ।
यो मां ददाति सत्पात्रे पुण्यकाले विशेषतः ॥ २९
स विद्वान्स कुलीनश्च स पुमान्स च पुण्यकृत् ।
भूमिदान्नोपसर्पंति पाशा रौद्रा श्च दारुणाः ॥ ३०
बहवो दारुणास्तापा यमदण्डाश्च भीतिदाः ।
यो ददाति महीं मर्त्यो गमिष्यति स वै दिवम् ॥ ३१
यथा चन्द्रमसो वृद्धिरहन्यहनि जायते ।
तथा भूमिकृतं दानं सहस्रेभ्योऽभिवर्धते ॥ ३२
मुच्यते ब्रह्महा गोघ्नः कृतघ्नो गुरुतल्पगः ।
अपि सस्यान्वितां भूमिं दत्वा स्वर्गातिथिर्भवेत् ॥ ३३
यत्किञ्चित्कुरुते पापं पुरुषो वृत्ति कर्शितः ।
स्वल्पेन भूमिदानेन तस्य पापं विनश्यति ॥ ३४

कृत्वापि सुमहत्पापं दत्वा भूमिं द्विजोत्तमे ।
तमुद्व्रजति तत्पापं जीर्णां त्वचमिवोरगः ॥ ३५
भूदानं हयमेधेन तुल्यं प्राहुर्महर्षयः ।
श्रोत्रियं वृत्तसंपन्नमाहिताग्निं दृढव्रतम् ॥ ३६
प्रतिग्राह्य महीं ब्रह्मन्न याति यमसादनम् ।
तस्मान्न्यायार्जितां भूमिं प्रदद्यात्पापशान्तये ॥ ३७
इदमुक्तं समासेन भूमिदानं विशेषतः ।
इतः परं चेत् प्रष्टव्यमस्ति चेद्वद सुव्रत ॥ ३८

सुयज्ञः-

भूमिदानस्य माहात्म्यं त्वत्तोऽश्रावि मयाऽधुना ।
अपहारेषु यो दोषस्तन्मे प्रब्रूहि तत्वतः ॥ ३९

सांबः-

षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
तावद्वर्ष सहस्राणि हर्ता नरकमृच्छति ॥ ४०
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ ४१
आहर्तुरनुमन्ता तु द्विगुणं याति रौरवम् ।
अन्यैर्दत्तां महीमन्ये हरंति ज्ञानदुर्बलाः ॥ ४२
कृष्णसर्पाश्च जायन्ते विंध्याटव्यां न संशयः ।
तस्मात्सर्वैर्न हर्तव्या भूमिर्जानद्भिरेव हि ॥ ४३
दानात् स्वर्गो भवेदेव हरणे नरको ध्रुवः ।
तस्माद्दानं तदा कार्यं भूमिदानं विशेषतः ॥ ४४
पूर्वभुक्तगुणोपेतां भूमिं यस्तु प्रयच्छति ।
श्री वाञ्छ्ये मुक्तिदे ब्रह्मन् तस्य पुण्यफलं शृणु ॥ ४५

स सप्तगोत्रोद्भूतानां पुंसामेकोत्तरं शतम् ।
सन्तारयति संसारसागरान्नात्र संशयः ॥ ४६
स्वल्पामपि महीं दद्याद्दरिद्रोऽपि विशेषतः ।
एवमुक्तस्तु सांबेन सुयज्ञः पुनरब्रवीत् ॥ ४७

सुयज्ञः-

श्री वाञ्छ्ये मुक्तिदे गुप्तगङ्गातीरे महामुने ।
दत्तानामन्यदानानां फलं ब्रूहि ममाधुना ॥ ४८

साम्बः-

यः प्रयच्छति कन्यां तु श्री वाञ्छ्ये भुक्तिमुक्तिदे ।
तस्य पुण्यफलं वक्ष्ये शृणु यत्तेन चेतसा ॥ ४९
यावन्ति तस्याः कन्यायाः काये रोमाणि संति हि ।
तावद्वर्षसहस्राणि शिवलोके महीयते ॥ ५०
यो दापयति कन्यायाश्शुल्कं दत्वाऽपि कन्यकाम् ।
कुलैकविंशमुद्धृत्य ब्रह्मलोके चिरं वसेत् ॥ ५१
तस्मिञ्छ्री वाञ्छ्य नगरे पुण्यकाले विशेषतः ।
पूर्णचन्द्र प्रकाशेन विमानेन विराजितः ॥ ५२
शिवलोकमवाप्नोति शिवस्यैव प्रसादतः ।
तिलं ददाति यस्तस्मिन् श्रोत्रियाय विशेषतः ॥ ५३
षष्टिवर्षसहस्राणि पितृलोके महीयते ।
यः प्रयच्छति विप्राय तिलं धेनुं महामुने ॥ ५४
कन्यादानसहस्रस्य फलं प्राप्नोत्यसंशयम् ।
गान्तु यस्तु दरिद्राय श्रोत्रियाय प्रयच्छति ॥ ५५
तस्य दुष्कृतकर्माणि सद्यो नश्यन्त्यसंशयः ।
यावन्ति तस्या रोमाणि सन्ति गात्रे मुनीश्वर ॥ ५६

तावद्वर्षसहस्राणि गवां लोके महीयते ।
तिलं गावस्सुवर्णं चाप्यन्नं कन्या वसुंधरा ।। ५७
दातारं तारयन्तीह दत्तमात्रे द्विजाय वै ।
योऽनड्वाहं तु विप्राय श्रीवाञ्छ्ये संप्रयच्छति ।। ५८
कोटिवर्षं गवां लोके भुंक्ते भोगांश्च पुष्कलान् ।
गृहं दीपप्रभायुक्तं शय्यासनसमन्वितम् ।। ५९
भाजनोपस्करैर्युक्तं धनधान्यसमन्वितम् ।
दासीगोभूमिसंयुक्तं श्रीवाञ्छ्ये यः प्रयच्छति ।। ६०
ब्रह्मलोकमवाप्नोति यावदाभूतसंप्लवम् ।
शय्यां प्रास्तरणोपेतां सत्पात्रे यः प्रयच्छति ।। ६१
भोजयित्वा द्विजान् भक्त्या श्री वाञ्छ्येऽभीष्टसिद्धये ।
तेन पुण्यप्रभावेण पितृलोके महीयते ।। ६२
शिल्पं चाध्ययनं विद्यामन्त्रं चाप्यौषधानि च ।
यः प्रयच्छति विप्राय श्री वाञ्छ्ये कलिवर्जिते ।। ६३
स सप्तर्षि पदं याति पूज्यमानो महर्षिभिः ।
यः करोति मुनिश्रेष्ठ भरणं ब्राह्मणस्य तु ।। ६४
श्रोत्रियस्याभिजातस्य दरिद्रस्य कुटुंबिनः ।
गवां कोटिप्रदानेन यत्फलं समुदाहृतम् ।। ६५
तत्पुण्यफलमाप्नोति वर्षेणैकेन भो मुने ।
करकं कुण्डिकां वापि महद्वा जलभाजनम् ।। ६६
यः प्रयच्छति विप्राय श्री वाञ्छ्ये सर्वकामदे ।
स याति वारुणं लोकं दिव्यगन्धर्वसेवितः ।। ६७
ग्रीष्मे चतुर्षु मासेषु पानीयं यः प्रयच्छति ।
चन्द्रलोकमवाप्नोति श्री वाञ्छ्यक्षेत्र वैभवात् ।। ६८

शिरोऽभ्यङ्गप्रदानेन श्री वाञ्छ्ये कलिवर्जिते ।
सुभगो रूपवान् शूरः पण्डितश्च भवेद्ध्रुवम् ॥ ६९
तत्र वस्त्र प्रदानेन तेजस्वी प्रियदर्शनः।
सुभगो भवति श्रीमान् स्त्रीणां नित्यं मनोरमः ॥ ७०
उपानहौ च छत्रं च यः श्री वाञ्छ्ये प्रयच्छति ।
शक्रलोकमवाप्नोति सेव्यमानोऽप्सरोगणैः ॥ ७१
दन्तकाष्ठप्रदानेन प्रियवाक्यो भवेन्नरः ।
क्षीरं दधि घृतं वापि गुडं मधुरसं तथा ॥ ७२
ये श्री वाञ्छ्ये प्रयच्छन्ति भक्तिभावनया मुदा ।
षष्टिवर्षसहस्राणि तेजोवत्यां वसंति ते ॥ ७३
दानानि चैव दानानां फलानि च महामुने ।
केन वा शक्यते वक्तुं ब्रह्मणाऽपि न गद्यते ॥ ७४
किञ्चिदुक्तं तव ब्रह्मन् दानमाहात्म्यमुत्तमम् ।
साकल्येन मया वक्तुं अशक्यं वर्षकोटिभिः ॥ ७५
एतद्दानस्य माहात्म्यं ये शृण्वन्ति पठन्ति च ।
सर्वदानफलं स्वर्गं भुंजते ते न संशयः ॥ ७६

इति श्री सांबोपपुराणे श्री वाञ्छ्यमाहात्म्ये एकविंशोऽध्यायः ॥

## षट्त्रिंशोऽध्यायः

सुयज्ञः-

श्री वाञ्छ्येशविमानस्य स्मरणान्मुक्तिदस्य वै ।
परितो वर्तमानानां तीर्थानां कारणानि मे ॥ १
माहात्म्यञ्च वदस्वाद्य कृपया साम्ब सत्तम ।
एवमुक्तस्सुयज्ञेन सन्तुष्टस्तत् प्रसङ्गतः ॥ २

प्राह गंभीरया वाचा माहात्म्यं कारणानि च ।

साम्बः–

सुयज्ञ शृणु वक्ष्यामि तीर्थानां कारणानि ते ।। ३

प्रागारभ्य क्रमात्तेषां माहात्म्यं च यथामति ।

पुरा तु ब्रह्मकल्पान्ते जगति प्रलयं गते ।। ४

शिवलोके महादेवमेवं पप्रच्छ पार्वती ।

पातालादिषु लोकेषु सत्यान्तेषु महेश्वर ।। ५

जगत्क्षये जलैः काशीं विना स्थानं किमस्ति चेत् ।

प्रदर्शय महादेव क्षोण्यां मय्यस्ति ते कृपा ।। ६

एवमुक्तस्स पार्वत्या पार्वतीवल्लभः प्रभुः ।

तथैव दर्शयिष्यामि समागच्छ मया सह ।। ७

इत्युक्त्वा नन्दिना नीतं रजताद्रिमिव स्थितम् ।

वृषमारुह्य पार्वत्या सह नन्द्यादिभिर्वृतः ।। ८

वीज्यमानोऽमरस्त्रीभिश्चामरैस्स्वर्णदण्डकैः ।

कुण्डोदरधृतच्छत्रो गगने मेरुदक्षिणे ।। ९

गत्वा प्रदर्शयामास पश्य पार्वति मत्प्रिये ।

तानि काशीसमानानि षट्स्थानानि महेश्वरि ।। १०

प्रलयाविषयेष्वेषु श्वेतारण्यादिकेष्वहो ।

एकं दक्षिणतो भाति कावेर्या योजनद्वये ।। ११

पश्य श्री वाञ्छ्यमित्येतत् स्थानं मुक्तिप्रदं नृणाम् ।

श्री वाञ्छ्यं मुक्तिदं स्मृत्वा काशीमरणयोगतः ।। १२

तत्स्थानसदृशं स्थानं भुवि नास्ति गिरीन्द्रजे ।

इत्युक्ता परमेशेन हृष्टा प्राह त्रियम्बकम् ।। १३

तत् क्षेत्रालोकने वांछा महती मम वर्तते ।

तस्माद्दर्शय तत्क्षेत्रं प्रलयाविषयं विभो ।। १४

इत्युक्तस्स तया शम्भुर्गत्वा श्रीवाञ्छ्यभूतलम् ।
दर्शयामास पार्वत्याः परमेशो दयानिधिः ॥ १५

दृष्ट्वा तत्स्थानमतुलं देवी प्राह शुचिस्मिता ।
रमणीयमिदं क्षेत्रं लिङ्गं ज्योतिर्मयं तथा ॥ १६

तीर्थं तेजोमयं चापि दृष्ट्वाऽऽनन्दो ममैधते ।
अत्रैव वासो मे भूयात् त्वया सह महेश्वर ॥ १७

एतद्वाक्यामृतं पीत्वा कर्णाभ्यां हृष्ट मानसः ।
तथैवात्र तव प्रीत्यै निवसामि त्वया सह ॥ १८

इत्येवमवरुह्याशु वृषाच्छ्रीवाञ्छ्य भूतले ।
स्वीये स्वायम्भुवे लिङ्गे तिरोधात्स महेश्वरः ॥ १९

देवी च पार्श्वसंस्थायां ज्ञानशक्त्यां तिरोहिता ।
विरते प्रलये सृष्टिकाले प्राप्ते महेश्वरः ॥ २०

प्राह गौरीं सृजस्वेति लोकसृष्टिविधायिनम् ।
स्रष्टारमित्यथाज्ञाप्य तस्यामेव विवेश ह ॥ २१

तस्याज्ञावशगा देवी संप्रहृष्टतनूरुहा ।
स्रष्टुकामा च स्रष्टारं निर्गत्य स्वालयाद्बहिः ॥ २२

पुण्यपुष्करिणीतीर्थे वीक्षांचक्रेऽथ पार्वती ।
देव्यालोकनमात्रेण सौवर्णं पङ्कजं महत् ॥ २३

सहस्रदलसंयुक्तं समदृश्यत तज्जले ।
तस्मिन् तत्कर्णिकामध्ये ब्रह्मा प्रादुरभूत्तदा ॥ २४

ततो ब्रह्मा समुत्थाय तीरे भाग्याप्तनायकीम् ।
दृष्ट्वा निकटमागत्य नत्वा नत्वा पुनः पुनः ॥ २५

स्तुतिं चकार भाग्याप्त नायक्याः प्रीतिहेतवे ।
ब्रह्मकृता—अम्बिकास्तुतिः—
वन्दे भाग्यप्रदां देवीं वन्दे भासुरविग्रहाम् ॥ २६

वन्दे पङ्कजरक्ताक्षीं वन्दे भाग्याप्तनायकीम् ।
वन्दे सूर्येन्दुनयनां वन्दे सोमकलाधराम् ।। २७

वन्दे मुकुन्दसहजां वन्दे भाग्याप्तनायकीम् ।
वन्दे बृन्दारकैर्वन्द्यां वन्दे मन्दस्मिताननाम् ।। २८

वन्दे पाशांकुशधरां वन्दे भाग्याप्तनायकीम् ।
वन्दे भक्तजनार्च्याङ्घ्रिं वन्दे पन्नगकुण्डलाम् ।। २९

वन्दे वराभयकरां वन्दे भाग्याप्तनायकीम् ।
वन्दे बालार्कवर्णाभां वन्दे चन्द्राननामुमाम् ।। ३०

वन्दे शङ्करवामाङ्गीं वन्दे भाग्याप्तनायकीम् ।
भाग्यमाप्तुं यतोऽत्रागात्कैलासाद्वाञ्छ्यभूतले ।। ३१

भाग्याप्तनायकीत्याख्या प्रसिद्धा भुवनत्रये ।
पञ्चरत्नस्तवेनैवं स्तुत्वा भाग्याप्तनायकीम् ।। ३२

सृष्टिसामर्थ्यलाभाय तपस्तप्त्वा सुदुष्करम् ।
आप्त्वा च सृष्टिसामर्थ्यमचिरेणात्मभूस्स्वयम् ।। ३३

भाग्याप्तनायकीवाञ्छ्यनाथयोः कृपया मुदा ।
सृष्ट्वा तु सकलान्लोकान् स्वस्य लोकप्रसिद्धये ।। ३४

श्री वाञ्छ्येशानुकम्पार्थं भारतीपतिरादरात् ।
उत्सवं कारयामास महाविभवविस्तरम् ।। ३५

माघमासे सिते पक्षे अश्विन्यादि मखान्तकम् ।
ध्वजारोहादि तीर्थान्तं मुदा दशदिनावधि ।। ३६

कृत्वा तीर्थोत्सवमपि कर्तुकामश्चतुर्मुखः ।
पुण्याब्जिन्याः पुरो भागे शरपातावधेः परे ।। ३७

कृत्वा तटाकं विपुलं तत्रावाह्य मरुद्वृधाम् ।
तत्र स्नात्वा विधिर्देवैस्संपाद्य प्लवमुत्तमम् ।। ३८

तस्मिन् कृत्वा स्यन्दनं च छत्रचामरसंयुतम् ।
दर्पणैश्च ध्वजैस्सम्यक् रंभाभिः क्रमुकैरपि ॥ ३९
वितानैर्विविधैः पुष्पैरलङ्कृत्य विधिस्ततः ।
महाभिषेक नैवेद्यैर्वाद्यैर्नृत्यैर्महार्चनम् ॥ ४०
कृत्वा तीर्थस्य परितो भूरुहैः क्रमुकैर्ध्वजैः ।
रम्भाभिरभितः स्रग्भिर्दीपावलिभिरुज्ज्वलैः ॥ ४१
अलङ्कृत्य विधिः पश्चात् प्लवस्थस्यन्दनोत्तमे ।
साम्बं चन्द्रजटाचूडं संस्थाप्य विधिरादरात् ॥ ४२
वेदघोषैर्वाद्यघोषैर्नृत्तैर्बहुविधैस्तथा ।
बाणैर्बहुविधैस्स्वर्णदीपिकाभिश्च राजतैः ॥ ४३
अन्यैर्दीपैर्बहुविधैस्तीर्थोत्सवमकारयत् ।
तेनोत्सवेन सन्तुष्टः श्री वाञ्छ्येशो दयानिधिः ॥ ४४
आहूयामरबृन्देशं ब्रह्माणं प्राह शङ्करः ।
ब्रह्मन् प्रीतोऽस्मि तेऽभीष्टं प्रार्थयस्व ददाम्यहम् ॥ ४५
एवमुक्तस्ततो ब्रह्मा श्रीवाञ्छ्येशं प्रणम्य तु ।
स्वाभीष्टं प्रार्थयामास प्रार्थितादधिकार्थदम् ॥ ४६
लोकानां सृष्टिसामर्थ्यं युष्माल्लब्धं मया पुरा ।
इदानीं देहि वासार्थं मम लोकमनुत्तमम् ॥ ४७
देव्या साकं रथस्थं त्वां ये सेवन्ते महेश्वर ।
तेषामष्टविधां भूतिं प्रयच्छान्ते च ते पदम् ॥ ४८
एवमुक्ते चतुर्वक्त्रे लोकमीशो ह्यकल्पयत् ।
भूरादिसप्तमे सत्यनाम्नि लोके ममाज्ञया ॥ ४९
वस तत्रैव तीर्थं च त्वन्नाम्ना प्रथितं भवेत् ।
देव्या मां तु प्लवारूढं भजतामष्टसिद्धयः ॥ ५०

सिद्ध्यन्त्वन्यं वरं त्वेकं तव दास्ये विधे शृणु ।
त्वयाऽवाहितकावेर्यामस्यां मज्जन्ति ये नराः ॥ ५१

माघे मासि भगे तारे विधिनैव भगोदये ।
एकेन स्नानमात्रेण कावेर्यां तौलिभास्करे ॥ ५२

माघे स्नानेन यत्पुण्यं तद्भवेदाज्ञया मम ।
इत्युक्त्वान्तरधाद् देव्या श्रीवाञ्छ्येशो घृणानिधिः ॥ ५३

नतः पद्मभवोऽपि स्वमभीष्टं प्राप्य शङ्करात् ।
सत्यलोकं ययौ देवैः सार्धं ब्रह्मा ततः परम् ॥ ५४

इदं तीर्थं ब्रह्मतीर्थमिति लोके प्रसिद्धमत् ।
उक्तं ते ब्रह्मतीर्थस्य कारणं विस्तरेण तु ॥ ५५

एतत्कारणमेकाग्रं ये शृण्वन्ति पठन्ति च ।
ते ब्रह्मलोकं गच्छन्ति नात्र कार्या विचारणा ॥ ५६

इति श्री साम्बोपपुराणे श्री वाञ्छ्यमाहात्म्ये द्वाविंशोऽध्यायः

***

# सप्तत्रिंशोऽध्यायः

साम्बः –

वाञ्छ्येशस्याविदूरेऽग्नेः कोणे ब्रह्ममुनेऽधुना ।
वर्तमानस्य तीर्थस्य चोत्पत्तिं महिमां च ते ॥ १

प्रवक्ष्याम्यादरेणा हमेकाग्रमनसा शृणु ।
अस्मिन् कल्पान्तरे पूर्वे हव्यवाहस्स्व आत्मनि ॥ २

चिन्तयामास मनसि किं कर्तव्यं मयेति च ।
ब्रह्मर्षितः पुरा शापात्सर्वभक्षत्वमाशु मे ॥ ३

प्राप्तं त्वभक्ष्यभक्षत्वमपि चैतत्कथं व्रजेत् ।
इति सञ्चिन्तयत्यस्मिन् हविर्भुज्यशरीरिणी ॥ ४

वागाकाशे समुत्पन्ना प्राह सा पावकं प्रति ।
तत्पापपरिशुद्ध्यर्थं याहि श्री वाञ्छ्यभूतलम् ॥ ५
द्विशीर्षेत्युक्तमन्त्रेण पुण्यपुष्करिणीजले ।
स्नानेन शापमोक्षो हि भविष्यति न संशयः ॥ ६
इत्याकाशभवां वाणीं श्रुत्वा तेजोवतीश्वरः ।
निरगाद्धव्यवाहस्तु गन्तुं श्रीवाञ्छ्यभूतलम् ॥ ७
गत्वा श्रीवाञ्छ्यनगरे चन्दनारण्यध्यगे ।
पुण्यपुष्करिणीतीर्थे स्थित्वा श्रीवाञ्छ्यनायकम् ॥ ८
श्री वाञ्छ्यनायिकां चापि नत्वा स्तुत्वा विभावसुः ।
कृत्वा पर्णकुटीं तस्मिन्नाग्नेय्यां दिश्यदूरतः ॥ ९
तीर्थं च कृत्वा तत्रैव तत्तटे दक्षिणे शुभे ।
संस्थाप्य तत्र कैलासनाथाख्यं लिङ्गमुत्तमम् ॥ १०
प्रतिष्ठाप्य विधानेन स्वपापपरिशुद्धये ।
आवाह्याखिलतीर्थानि स्वीये तीर्थे हुताशनः ॥ ११
तत्तीर्थ तोयैस्संपूज्य कैलासेश्वरमादरात् ।
स्थितः कतिपयाहस्सु गतेषु स विभावसुः ॥ १२
कार्तिक्यां कृत्तिकायोगे पूजनीयो मयाऽग्निभूः ।
इति सञ्चिन्त्य मनसा विश्वकर्माणमैच्छत ॥ १३
स्मरणादागतं विश्वकर्माणं प्राह हव्यभुक् ।
विश्वकर्मन्मम प्रीत्यै स्कन्दं निर्मातुमर्हसि ॥ १४
स एवमुक्तस्सहसा निर्ममे स्कन्दमव्ययम् ।
ततः प्रातिष्ठिपच्छैवैश्शैवागमविचक्षणैः ॥ १५
प्राप्ते तु वृश्चिके मित्रे वह्निस्त्रिंशद्दिनावधि ।
उत्सवं कारयामास देवसेनापतेः प्रभोः ॥ १६

कार्तिक्यां कृत्तिकायोगे स्यन्दनस्थं गुहं विभुम् ।
ये सेवन्ते नरास्तेषां भवेत्सप्तसु जन्मसु ॥ १७

विप्रत्वं धनधान्यानामाधिपत्यं च निश्चितम् ।
इति स्वान्ते विनिश्चित्य स्यन्दनोत्सवमातनोत् ॥ १८

तेनोत्सवेन सन्तुष्टः प्रादुरासीत्स षण्मुखः ।
प्रादुर्भूतं तु तं दृष्ट्वा तारकारिं हुताशनः ॥ १९

कार्तिक्यां कार्तिके मासि नत्वा स्तुत्वा पुनः पुनः ।
प्रार्थयामास पार्वत्या वदनांबुजभास्करम् ॥ २०

सुब्रह्मण्य नमस्तुभ्यं सुरसेनापते विभो ।
रक्ष मामखिलेशान कृपादृष्ट्या विलोकय ॥ २१

एवमुक्तस्स सेनानीः पावकं प्रत्यभाषत ।
अग्ने तव प्रसन्नोऽहं पूजया मत् प्रतिष्ठया ॥ २२

रथोत्सवेनापि तथा सन्तुष्टं मम मानसम् ।
प्रष्टव्यं भवताऽभीष्टं तवादेयं न मेऽस्ति हि ॥ २३

इत्युक्तः शिखिवाहेन स्वाभीष्टं पावको मुदा ।
प्रार्थयामास लोकानां हिताय स्वाघशान्तये ॥ २४

स्वामिन्पुराऽहं शप्तोऽस्मि मद्दोषेण महर्षिणा ।
सर्वभक्षो भवाभक्ष्यभक्षकोऽप्यचिरादिति ॥ २५

अभक्ष्य भक्षणात्सर्वभक्षणाद्यन्मयार्जितम् ।
तत्पातकसमूहं तत्त्वत्प्रसादाद्विनश्यतु ॥ २६

कार्तिक्यां कृत्तिकायोगे मत्तीर्थाभिषवेण ते ।
दर्शनेन च पापौघं सकृत् स्नानाद्विनश्यतु ॥ २७

एतत्तीर्थमपि स्वामिन् मदीयं भुवनत्रये ।
अग्नितीर्थमिति ख्यातिं प्रयातु कृपया तव ॥ २८

अद्य प्रभृति ये केचिन्मानुषाऽभक्ष्यभक्षणम् ।
कुर्वन्ति तेऽत्र स्नानेन विशुद्धा यान्तु मत्पदम् ।। २९
ये भुञ्जतेऽन्नं सर्वत्र योग्यायोग्य विचारणाम् ।
अविचिन्त्य मदीयेऽस्मिन् तीर्थे ते विनिमज्जनात् ।। ३०
विमुक्तपापास्संयान्तु मम लोकमनामयम् ।
अद्य प्रभृति ये केचित् कार्तिक्यां कृत्तिकादिने ।। ३१
मदीयेऽस्मिन्नग्नितीर्थे हायनस्य सकृद्विभो ।
स्नात्वा रथस्थं त्वां स्वामिन् सेवन्ते मानवा भुवि ।। ३२
धनाढ्या वेदवन्तश्च ते भवेयुर्द्विजोत्तमाः ।
समिधाग्निपरित्यागाद्यो दोषो ब्रह्मचारिणाम् ।। ३३
औपासनपरित्यागाद्यो दोषोऽजनि यज्वनाम् ।। ३४
तद्दोषो नश्यतु क्षिप्रं मम तीर्थस्य मज्जनात् ।
अनग्नयोऽनाश्रमिणो विधुरा विधवास्तथा ।। ३५
मत्पूजनमकुर्वाणा मत्तीर्थस्नानमात्रतः ।
विशुद्धा यान्तु मल्लोकं कृपया तव षण्मुख ।। ३६
येऽकुर्वाणाः पूर्णिमायाममायां स्थालीपाकं चेष्टिमत्यादरेण ।
सायं प्रातर्वैश्वदेवं च तेऽपि स्नात्वा पापैस्तैर्विमुक्ता भवन्तु ।। ३७
इत्यग्निनाऽर्थितः स्कन्दस्तथेत्युक्त्वा तिरोहितः ।
सोऽपि वैश्वानरः स्कन्दादाप्यानेकान्मनोरथान् ।। ३८
स्वं लोकमगमद् ब्रह्मन्कृतार्थेनान्तरात्मना ।
उक्तं तवाग्नितीर्थस्य कारणं भुक्तिमुक्तिदम् ।। ३९
तदाप्रभृति तत्तीर्थमग्नितीर्थमितीर्यते ।
सुयज्ञः-
कथं तस्याग्नितीर्थस्य नरा नामान्तरं मुने ।। ४०

वदन्ति नारदीयं तत्तीर्थमित्येव साम्प्रतम् ।
हेतुना केन तन्नाम्ना प्रसिद्धिर्जायतेऽधुना ॥ ४१
तद्वदस्व मुनिश्रेष्ठ शुश्रूषोर्मम साम्प्रतम् ।
साम्बः -
शृणुष्व तत् प्रवक्ष्यामि कारणं सावधानतः ॥ ४२
सुधर्मायां पुरा ब्रह्मन्नमराणां च सन्निधौ ।
गन्धर्वाधिपतेश्चित्र रथिनो नारदस्य च ॥ ४३
वीणागानेऽहमधिक इत्यन्योन्यं तयोर्महान् ।
विवादेऽभूत्तदा देवा मास्तु वां कलहोऽत्र तु ॥ ४४
युवाभ्यामत्र गायेतामस्माभिर्ज्ञायतेऽधिकम् ।
इत्युक्तौ तौ सुपर्वाद्यैरगायेतां तदा मुदा ॥ ४५
तयोश्चित्ररथं गाने त्वधिकं मेनिरे सुराः ।
तदानीं नारदश्चित्र रथादाधिक्यमात्मनः ॥ ४६
अन्विच्छन् गानविद्यायां प्रतस्थे सुरलोकतः ।
तदाकाशभवा वाणी देवर्षिं नारदं तदा ॥ ४७
सिद्धिक्षेत्रेषु सर्वेषु सद्यः सिद्धि प्रदं मुने ।
कावेर्या दक्षिणे तीरे योजनद्वयमात्रके ॥ ४८
श्री वाञ्छ्यमिति विख्यातं सद्यः सिद्धिप्रदं मुने ।
तत्र गत्वाऽग्नितीर्थे त्वं स्नात्वा कैलासनायकम् ॥ ४९
निषेव्य तत्रोषित्वा तु स्नात्वा पुण्याब्जिनीजले ।
श्री वाञ्छ्यनाथं श्री वाञ्छ्यनायिकां च पुनः पुनः ॥ ५०
नत्वा स्तुत्वा तु तत्रैव प्रतिष्ठाप्य सरस्वतीम् ।
पूजयस्व यथाशास्त्रमचिरात्सा प्रसीदति ॥ ५१
सरस्वतीप्रसादेन तवाधिक्यं भविष्यति ।
इत्युक्त्वा विररामाथ नारदोपि मुदं ययौ ॥ ५२

तत्र श्रीवाञ्छ्यमभ्येत्य तीर्थेऽग्नेः पावने मुने ।
स्नात्वा तद्दक्षिणे तीरे कृत्वा पर्णकुटीं ततः ॥ ५३
तत्र स्थित्वा सेवमानस्त्रिकालं भक्तिपूर्वकम् ।
कैलासनायकं पश्चाच्छ्री वाञ्छ्येशालये शुभे ॥ ५४
गत्वा पुण्याब्जिनीतोये स्नात्वा श्री वाञ्छ्यनायकम् ।
निषेव्य देवीं तत्रैव प्रतिष्ठाप्य सरस्वतीम् ॥ ५५
पूजयामास विधिवच्छ्रद्धाभक्ति समन्वितः ।
अचिरात्पूजया तस्य प्रादुरासीत्सरस्वती ॥ ५६
प्रादुर्भूता तदा दृष्ट्वा नारदो मुनिसत्तमः ।
नत्वा स्तुत्वा पुनर्नत्वा स्तोत्रं चक्रे मुदान्वितः ॥ ५७
वन्दे कुन्देन्दुधवलां वन्दे शुभ्रांशुकान्विताम् ।
वन्दे वीणावरकरां वन्देऽहं विधिवल्लभाम् ॥ ५८
वन्दे पद्मासनां वाणीं वन्दे पद्मदलेक्षणाम् ।
वन्दे बृन्दारकैर्वन्द्यां वन्देऽहं विधिवल्लभाम् ॥ ५९
वन्दे पीताम्बरधरां वन्दे तां हंसवाहिनीम् ।
वन्दे सरस्वतीं देवीं वन्देऽहं विधिवल्लभाम् ॥ ६०
एवं संस्तूयमानं तं नारदं सा सरस्वती ।
प्राह गम्भीरया वाचा देवर्षिं नारदं तदा ॥ ६१
त्वयाऽहं स्थापिता सम्यक्पूजिता च सुभक्तितः ।
प्रदास्येऽभीष्टमधुना नादेयं विद्यते मम ॥ ६२
एवमुक्तः सरस्वत्या नारदः प्रीतिसंयुतः ।
स्वाभीष्टं प्रार्थयामास ब्रह्माणीं नारदस्तदा ॥ ६३
वीणागाने चित्ररथादाधिक्यं देहि मेऽधुना ।
तथेत्यन्तर्हिता पश्चान्नारदोऽप्याप्तवान्मुदम् ॥ ६४

पुनश्च पूजयामास लोकानुग्रहकाम्यया ।
नारदो भारतीं भक्त्या नवरात्रं मुदान्वितः ।। ६५
भारती पूजया तस्य पुनः प्रादुरभून्मुदा ।
देवर्षे किमभीष्टन्ते पुनर्देयं वदाधुना ।। ६६
इत्युक्तो नारदो वाण्या प्राह तां मातरं स्वकाम् ।
अस्मिन्नाश्वयुजे मासि नवरात्रं महोत्सवम् ।। ६७
तव कुर्वन्ति भक्त्या ये तेषामिष्टप्रदा भव ।
चतुष्षष्टिकलां चापि तेभ्यो दिश सरस्वति ।। ६८
एवमुक्ता तथेत्युक्त्वा तदैवान्तर्द्धिमाप सा ।
ये कुर्वन्ति सरस्वत्या नवरात्रिमहोत्सवम् ।। ६९
तेऽभीष्टमखिलं विद्यामशेषामाप्नुवन्ति हि ।
इत्युक्तस्स सुयज्ञस्तु पुनः पप्रच्छ तं मुनिम् ।। ७०
ततः किं कृतवांस्तत्र नारदो मे वदाधुना ।।
साम्बः–
स्वाभीष्टमखिलं तत्र सरस्वत्याः प्रसादतः ।। ७१
आप्तुं स्वनाम्ना विख्यातिमग्रेस्तीर्थस्य नारदः ।
तपश्चचार सा तस्य प्रादुर्भूयांबया सह ।
प्रोवाच नारदमुने किं दातव्यं मया वद ।। ७२
इत्युक्तः प्रार्थयामास मत्तीर्थस्नानमात्रतः ।
अभीष्टमतुलं लब्धमचिरादेव शङ्कर ।। ७३
तस्यास्य वह्नितीर्थस्य यावत्कलियुगावधि ।
मच्चरित्रप्रकाशार्थं मदाख्याऽप्यस्तु शङ्कर ।। ७४
यस्यां तिथौ भवान्मह्यमभीष्टं दत्तवानसि ।
तस्मिन् दिने त्वामुत्थानद्वादश्यां सेवते तु यः ।। ७५

तत्तीर्थे मज्जनं कुर्यात्तस्याभीष्टं दिशाचिरात् ।
उक्तोऽथ नारदेनैवं श्री वाञ्छेयेशो दयानिधिः ॥ ७६
तथेत्यदृश्यतामागात्तस्मिन् लिङ्गवरे तदा ।
तदा प्रभृति तत्तीर्थं कलौ नारदसंज्ञिकम् ॥ ७७
उक्तं नारदतीर्थस्य कारणं च मुने तव ।
ये त्वेतच्छृणुयुर्नित्यं वर्णयन्ति समाहिताः ॥ ७८
तरन्त्यपारसंसारसागरं ते न संशयः ॥ ७९

इति साम्बोपपुराणे श्री वाञ्छ्यमाहात्म्ये त्रयोविंशोऽध्यायः ॥

## ॥ अष्टत्रिंशोऽध्यायः ॥

सांबः-
अस्य नारदतीर्थस्य पश्चिमे वर्तते महत् ।
कृतान्तकुण्डमिति च प्रसिद्धं भुवनत्रये ॥ १
तत्तीर्थोत्पत्तिमपि च तन्माहात्म्यं च सादरम् ।
प्रवक्ष्या म्यधुनाऽहं ते शृणुष्वैकमना भवान् ॥ २
कस्मिंश्चित् ब्रह्मकल्पे तु यमो महिषवाहनः ।
कदाचिच्चिन्तयामास किं कर्तव्यं मयेति च ॥ ३
चिरकालं मया सर्वे प्राणिनोऽपि विहिंसिताः ।
सर्वधर्ममहिंसायामन्तर्भूतं न संशयः ॥ ४
अहिंसा परमो धर्मो लोके चास्मिन्नुदीर्यते ।
श्रुतिभिस्स्मृतिभिश्चैव पुरा णैरागमैरपि ॥ ५
एतत् ज्ञात्वापि मोहेन प्राणिनो हिंसिता मया ।
तत्पापपरिशुध्यर्थं यत्नः कार्यो मयाऽधुना ॥ ६
इति संचिन्त्य मनसा सर्वभूतक्षयस्ततः ।
शीघ्रसिद्धिप्रदं क्षेत्रं क्षोण्यां कुत्रेत्यचिन्तयत् ॥ ७

चिन्तयित्वा परिज्ञाय सन्तोषोत्फुल्ललोचनः ।
ज्ञातं ज्ञातं मयेदानीं श्रीवाञ्छ्यो वर्तते महान् ॥ ८

ब्रह्महत्यादिपापानि सद्यो नाशयति ध्रुवम् ।
मरणान्मज्जनात्तत्र वर्तनाच्च नरा भुवि ॥ ९

यमबाधाश्च दूतांश्च यमलोकं त्वरावशात् ।
अपश्यन्तो विमानस्था गच्छन्ति शिवमंदिरम् ॥ १०

तत्स्थानं वर्तते तत्र गत्वा श्री वाञ्छ्य नायकम् ।
उपास्याभीष्ट मचिरादाप्नवानीति सोऽन्तकः ॥ ११

निर्गत्य गत्वा तत्र श्रीवाञ्छ्ये पुण्याब्जिनीजले ।
पञ्चाङ्गेन विधानेन स्नात्वा भाग्यासनायिकाम् ॥ १२

वाञ्छ्येशं च प्रणम्याग्रे देव्या वामे क्षणाग्रतः ।
निर्माय तीर्थं तत्तीर्थे तीर्थान्यावाह्य भानुजः ॥ १३

तस्मिन्माध्याह्निकस्नानं कृत्वा माध्याह्निकीं क्रियाम् ।
अपि प्रातर्दिनान्ते च स्नात्वा पुण्याब्जिनीजले ॥ १४

स्वमनोरथ सिद्ध्यर्थं स्वस्य तीर्थोत्तरे तटे ।
कृत्वा पर्णकुटीं तत्र स्थित्वा तु विधिपूर्वकम् ॥ १५

तपसा पूजया चैव दानेन नियमेन च ।
तोषयामास सगणं वाञ्छ्येशं साम्बिकं यमः ॥ १६

ततस्तुष्टोऽब्रवीत्तस्य तपसा नियमेन च ।

श्री वाञ्छ्य नाथः -

कृतान्त ते प्रसन्नोऽस्मि त्वदीय तपसाऽधुना ॥ १७

किमभीष्टं वदेदानीं मया देयं वृकोदर ।
इत्युक्तो यमराजस्तु स्तुत्वा नत्वा पुनः पुनः ॥ १८

वाञ्छ्येशं वरयामास स्वाभीष्टं भास्करात्मजः ।
स्वामिन् सर्वजगन्नाथ वाञ्छ्येश वरदायक ॥ १९

बहुकालं समारभ्य प्राणिनो हिंसिता मया ।
तत्पापपरिशुद्धिं मे देहि वीक्ष्य कृपादृशा ।। २०
मयोत्पादितमेतत्तु तीर्थं मन्नामतः प्रभो ।
कृतान्तकुण्डमि त्येव प्रसिद्धं भवतु क्षितौ ।। २१
अद्य प्रभृति सर्वेषां प्राणिहिंसारतात्मनाम् ।
पापानि विलयं यान्तु मत्तीर्थस्नानमात्रतः ।। २२
ममाभीष्टप्रदानाय त्वत्सान्निध्यदिने विभो ।
माघमासे भरण्यां ये मम तीर्थे निमज्य तु ।। २३
त्वां सेवन्ते जनास्तेषां भुक्तिं मुक्तिं प्रयच्छ भो ।
एवमुक्तस्तथेत्युक्त्वा तत्रैवान्तरधीयत ।। २४
यमोऽपि स्वपदं प्राप्य किञ्चित्कालं पुरे स्थितः ।
पुनः कालान्तरे धर्मराजो मोहसमन्वितः ।। २५
शिवनाम्नां च माहात्म्यं भक्तानां भस्मनस्तथा ।
रुद्राक्षाणां च माहात्म्यं पञ्चाक्षरमनोस्तथा ।। २६
स्थानानां शङ्करस्याथ व्रतानामखिलात्मनः ।
अविज्ञाय तु माहात्म्यमन्तकः कालचोदितः ।। २७
बहुशः कृतवान् शंभोरपराधं क्रमेण सः ।
पुनः कालान्तरे शंभोः कृपया यमधर्मराट् ।। २८
गतमोहश्चिरं दध्यौ हृदये सर्वगं शिवम् ।
स्वापराधविशुद्ध्यर्थं स्थानं च प्रत्यभात्तदा ।। २९
तदानीमेव निर्गत्य श्रीवाञ्छ्यं पुनरेत्य सः ।
तपश्चकार सुमहद्वांञ्छ्येश प्रीतिहेतवे ।। ३०
ततस्तस्यैव तपसा सन्तुष्टो भक्तवत्सलः ।
भाग्याप्तनायकीनाथः प्रादुर्भूयाब्रवीद्यमम् ।। ३१

अत्रागत्य त्वया मृत्यो किं भूयस्तप आदृतम् ।
ब्रूहीष्टं ते प्रदास्यामि धर्माधर्मविदां वर ॥ ३२

एवमुक्तोऽन्तको नत्वा वाञ्छ्येशं वरदं विभुम् ।
प्रार्थयामास पद्मांघ्रिं पञ्चवक्त्रमुमासखम् ॥ ३३

यमः-

सुद्युम्नादंकिलश्वेतमार्कण्डेयादिकेष्वपि ।
अपराधा मयाऽनेकाः कृतास्त्वयि च तेषु च ॥ ३४

दूतेषु सहसा सोढ्वा रक्ष मां करुणानिधे ।
ममापराधसहनात्तव नाम महेश्वर ॥ ३५

अपराधसहश्चेति प्रसिद्धं भवतु प्रभो ।
एवमुक्तस्तथेत्युक्त्वा श्री वाञ्छ्येशो दयानिधिः ॥ ३६

दधार भक्तवात्सल्यादपराधसहाभिधाम् ।
अपराधसहश्चेति प्रसिद्धोऽभूज्जगत्त्रये ॥ ३७

पुनश्च नत्वा मार्तण्डिरपराधसहं शिवम् ।
कामं कामयमानोऽन्यदस्तौषीदिष्टदं विभुम् ॥ ३८

यमकृता शिवस्तुतिः-

इन्द्रादिदेवताबृन्द वन्द्यमानांघ्रिपङ्कजम् ।
वन्दे वाञ्छ्यपुरीशानमपराधसहं विभुम् ॥ ३९

कामिनां कामदं कामदाहकं करुणानिधिम् ।
कमलाकान्तनेत्राब्जरञ्जितांघ्रिसरोरुहम् ।
वन्दे वाञ्छ्य पुरीशानमपराधसहं विभुम् ॥ ४०

सोममूर्तिं सुराधीशं सोमसूर्याग्निलोचनम् ।
वन्दे वाञ्छ्यपुरीशानमपराधसहं विभुम् ॥ ४१

कनकाचलकोदण्डं कालकूटविषादिनम् ।
वन्दे वाञ्छ्यपुरीशानमपराधसहं विभुम् ॥ ४२

कमलाक्षतपः प्रीत्या वियुक्तां मां पुनः प्रदम् ।
वन्दे वाञ्छ्यपुरीशानमपराधसहं विभुम् ॥ ४३
हरिणाऽदृष्टचरणं विधिनाऽदृष्टशीर्षकम् ।
वन्दे वाञ्छ्यपुरीशानमपराधसहं विभुम् ॥ ४४
एवं स्तुत्वा पुनस्तस्य प्रणम्य प्रांजलिः स्थितः ।
यमेनैवं स्तुतस्तस्मै प्रीत्या परमया युतः ॥ ४५
भाग्याप्तनायकीनाथो गाणापत्यमनुत्तमम् ।
स्वस्यागतां नवीनां तामाख्यामपि च दत्तवान् ॥ ४६
अपराधसहश्चेति प्रसिद्धो भव भूतले ।
अद्यप्रभृति ते दत्तं मत्क्षेत्रपरिपालनम् ॥ ४७
तस्मात्त्वद्यारभ्यास्मिन्क्षेत्रे श्री वाञ्छ्यभूतले ।
मदाज्ञापालनं कुर्वन् तिष्ठ मत्सन्निधौ यम ॥ ४८
त्वत्तीर्थाभिमुखो भूत्वा क्षेत्रपालाभिधामपि ।
धृत्वा दुष्टान्विनिगृह्य शिष्टानां रक्षणं कुरु ॥ ४९
त्वमद्यारभ्य भूतानां प्रेतानां रक्षसां तथा ।
दुष्टानां च पिशाचानामसुराणां तथैव च ॥ ५०
अत्रागतानां दुष्टानां ग्रहाणां शिक्षणं कुरु ।
मा मुञ्च तान् ग्रहान्दुष्टान्मदनुज्ञां विना क्वचित् ॥ ५१
ये मत्क्षेत्रवरे स्थित्वा मयि भक्तिं प्रकुर्वते ।
ये त्रिकालेषु मामेककाले वापि प्रभेजिरे ॥ ५२
मत्प्रीतये सदा सर्वकर्माण्यत्र प्रकुर्वते ।
तेषामैश्वर्यमखिलं दत्वा तान् प्रतिपालय ॥ ५३
डांभिका भिन्नमर्यादाः प्रतिग्रहरताश्च ये ।
मत्क्षेत्रे पापकर्तारो मत्पूजायां पराङ्मुखाः ॥ ५४

मदाज्ञया तान्मत्क्षेत्रादन्त्यकाले वियोजय ।
अत्रागतांश्च पापिष्ठान्मरणार्थं मम स्थले ।। ५५

अस्मात् प्रच्यावयाशु त्वमन्यदेशमुपद्रवैः ।
कटकंबलयोर्वापि खड्गायां वापि मारय ।। ५६

एवमुक्त्वा कृतान्तं वै तस्मै दत्वा वरान्बहून् ।
स्वस्य लिङ्गे तिरोधात्तं पुनः प्रोवाच सोऽन्तकः ।। ५७

मम प्रादुर्भवदिने मदीय भरणीयुते ।
तवोत्सवे त्वां प्रत्यब्दं वोढुमिच्छामि शंकर ।। ५८

मय्यारूढं भवन्तं त्वां सेवन्ते ये नरा भुवि ।
तेषां भुक्तिं च मुक्तिं च प्रदेहि करुणानिधे ।। ५९

त्वदुत्सवेऽस्मिन्मत्तीर्थे त्वत्तीर्थे मत्प्रियाय यः ।
स्नात्वा मयि स्थितं भक्त्या सेवते त्वान्तु सांबिकम् ।। ६०

तस्याणिमाद्यष्ट सिद्धिं मुक्तिं चान्ते दिश प्रभो ।
एवमुक्तस्तथेत्युक्त्वा श्री वाञ्छ्येशोऽन्तकं प्रति ।। ६१

अन्तर्हितस्तदारभ्य दक्षिणाशापतिर्यमः ।
क्षेत्रपालकतामाख्यां गाणापत्यं च शंकरात् ।। ६२

अवाप्य वाहनत्वं च वर्ततेऽद्यापि भास्करिः ।
तेनेदं निर्मितं तीर्थं कृतान्तेन महात्मना ।। ६३

कृतान्तकुण्डमित्येव प्रसिद्धं भुवनत्रये ।
कृष्णांगारचतुर्दश्यां तत्र स्नात्वा तु तर्पणम् ।। ६४

कुर्वन्ति धर्मराजस्य प्रीत्यर्थं मनुजा भुवि ।
यमादिनामभिर्भक्त्या दक्षिणाशामुखं स्थिताः ।। ६५

देवतीर्थेन देवत्वात्कृत्वा हव्येन सादरम् ।
यमो नियन्तेत्येतच्च शतकृत्वो जपंति ये ।। ६६

तेषामभीष्टसिद्धिस्स्यादचिरादेव नान्यथा ।
उक्तं कृतान्ततीर्थस्य माहात्म्यं तव सुव्रत ॥
इतः परं ते प्रष्टव्यमस्ति चेत् पृच्छ मा चिरम् ॥ ६७

इति श्री सांबोपपुराणे श्री वाञ्छ्यमाहात्म्ये चतुर्विंशोऽध्यायः

## ॥ अथ एकोनचत्वारिंशोऽध्यायः ॥

सांबः-

कृतान्तकुण्डादेतस्मान्नैर्ऋत्यां दिश्यनुत्तमम् ।
अदूरे वर्तते तीर्थं सर्वतीर्थाभिधं महत् ॥ १
तस्योत्पत्तिं तथा तस्य माहात्म्यमपि ते मुदा ।
प्रवक्ष्यामि मुनिश्रेष्ठ शृणुष्वैकमना भवान् ॥ २
सर्वो नाम मुनिः श्रीमान् शाकटायनवंशजः ।
कस्यचित् ब्रह्मणः कल्पे द्वापरान्ते महामतिः ॥ ३
भार्यया चारुसर्वाङ्ग्या नाम्ना कनकदामया ।
सरस्वतीनदीतीरे कृत्वाऽऽश्रमपदं तदा ॥ ४
स्वधर्मनिरतो नित्यं स्वाध्यायाध्ययने रतः ।
अतिथीनां प्रियकरः पञ्चयज्ञपरायणः ॥ ५
शिवपूजारतो नित्यं शिवध्यानपरायणः ।
धर्मेषु निरतो नित्यमधर्मेषु पराङ्मुखः ॥ ६
एवं प्रवर्तमानस्य सर्वनाम्नो द्विजस्य ह ।
हायनानि गतान्यासन् कतिचित्तदनन्तरम् ॥ ७
भूलोके कलिराविक्षत्सर्वेषां दुर्गतिप्रदः ।
प्राणिनः कलिनाविष्टा अधर्मरुचयोऽभवन् ॥ ८
एतत्सर्वं विलोक्याथ सर्वनामा द्विजो महान् ।
कलिना भीतभीतस्सन् किं करोमीत्यचिन्तयत् ॥ ९

क्व गच्छामः क्व यास्यामः क्व गते न कलिर्भवेत् ।
क्व धर्मो रमते नित्यं कलिनानेन मेऽधुना ॥ १०

अधर्मो धर्मरूपेण प्रतिभाति ममाधुना ।
क्व गते कलिबाधा मे न भवेदित्यचिन्तयत् ॥ ११

तदानीमशरीरा वागाह सर्वं द्विजोत्तमम् ।
सर्व सर्व महाभाग शृणु वक्ष्यामि ते हितम् ॥ १२

यत्र गत्वा कलेर्भीतिर्न भवेत्तव सुव्रत ।
कावेर्या दक्षिणे तीरे योजनद्वयमात्रके ॥ १३

वर्तते स्थानमतुलं श्रीवाञ्छ्यमिति विश्रुतम् ।
भुक्तिदं मुक्तिदं नृणां कलौ नान्यत् स्थलं क्वचित् ॥ १४

जेतव्योऽयं कलिरिति मनीषा तेऽस्ति चेदितः ।
गच्छ शीघ्रमिति प्रागाद्वागाकाशसमुद्भवा ॥ १५

तदाकाशवचः श्रुत्वा निरगाद्भार्यया सह ।
गच्छन्तं ब्रा ह्मण श्रेष्ठमनुयाति स्म शीघ्रतः ॥ १६

तिष्ठ तिष्ठ मया ग्रस्तः क्व गच्छसि द्विजाधुना ।
इत्युच्यमानः कलिना पश्चाद्दृष्ट्वा भयार्दितः ॥ १७

वेगेन महता चैव श्रीवाञ्छ्यं प्रत्यधावत ।
तं दृष्ट्वा कलिमायान्तं भयकंपितविग्रहः ॥ १८

रक्ष रक्ष कृपासिन्धो श्रीवाञ्छ्येश जगत्पते ।
कलिना द्रावितोऽहं त्वां शरण्यं शरणं गतः ॥ १९

एतद्दैन्यवचः श्रुत्वा दीनरक्षाधुरंधरः ।
निकटस्थं क्षेत्रपालमपराधसहाभिधम् ॥ २०

तद्रक्षणार्थं कृपया वीक्षांचक्रे सुरेश्वरः ।
श्री वाञ्छ्येशकटाक्षेण चोदितो गणनायकः ॥ २१

निर्गत्यालोकयामास परितः पत्तनाद्बहिः ।
द्रावयन्तं क्रोशमात्रे कलिं दृष्ट्वा भयानकम् ।। २२
हुंकृत्य स्थापयामास क्षेत्रपालो गणाग्रणीः ।
स कलिः स्तंभितस्तेन मुक्त्वा सर्वाभिधं द्विजम् ।। २३
अपराधसहं नत्वा स्तुत्वा च विविधैस्स्तवैः ।
प्रार्थयामास स कलिः श्रीवाञ्छ्यक्षेत्र पालकम् ।। २४
अज्ञानादागतं मां त्वं स्तंभनान्मोचयाधुना ।
अस्य त्वदीयस्थानस्य करोम्याधिक्यमंजसा ।। २५
अमङ्गलोऽहं सर्वत्राप्यत्र मङ्गलकृत्सदा ।
भवेयमस्मिन् स्थाने ये पञ्चक्रोशमिते जनाः ।। २६
निवसन्ति सदा तेषां मत्पीडा न भवेत्कलौ ।
युगे कदाचिद्यत्राहमभिस्तंभितवांस्त्वया ।। २७
कलिमङ्गलमित्येव तत् स्थानं प्रथितं भवेत् ।
पादक्रोशमिदं पञ्चक्रोशेष्वन्तर्गतं स्थलम् ।। २८
दापयस्व भवान्मह्यं वासाय क्रोशमात्रके ।
श्रीवाञ्छ्येशस्य लिङ्गस्य पश्चिमे मुक्तिदे स्थले ।। २९
अत्र मन्नामके स्थाने मेषसंक्रमिते रवौ ।
समागत्य निशामेकामुषित्वा प्रतिवत्सरम् ।। ३०
गुप्तत्रिपथगामिन्यां स्नात्वाऽहं विधिपूर्वकम् ।
श्रीवाञ्छ्य नायिकामंबां श्रीवाञ्छ्येशं च शङ्करम् ।। ३१
संपूज्य विधिवन्नत्वा स्तुत्वा च विविधैस्स्तवैः ।
गतपापो भविष्यामि वर्षमात्रात् कृतांहसः ।। ३२
कलिनैवं प्रार्थ्यमानः क्षेत्रपालो मुदान्वितः ।
अनुज्ञया तथेत्याह श्री वाञ्छ्येशस्य भो मुने ।। ३३

एवं लब्धवरस्तस्मात् स्वस्थानं प्रययौ मुदा ।
प्रत्यब्दमेवमागत्य स्नात्वा संपूज्य गच्छति ।। ३४
अपराधसहस्यास्य कलिनिग्रहणा न्मुने ।। ३५
सर्वतीर्थप्रसङ्गेन श्रीवाञ्छ्य क्षेत्र वासिनाम् ।
कलिबाधापि नास्त्येतदपि ते वर्णितं मया ।। ३६
शाकटायनसन्तानसंभूतस्तदनन्तरम् ।
सभार्यस्सहसाऽगत्य श्री वाञ्छ्येशालयं मुदा ।। ३७
गुप्तगङ्गांभसि स्नात्वा कृत्वा तात्कालिकीं क्रियाम् ।
भाग्यान् भोक्तुं समाप्तेति नाम्ना भाग्याप्तनायकीम् ।। ३८
कैलासादिति तां नत्वा प्रथमं तदनन्तरम् ।
पश्चिमाभिमुखं लिङ्गं श्री वाञ्छ्येशस्य सुन्दरम् ।। ३९
नत्वा स्तोत्रवरैस्स्तुत्वा लिङ्गं नैर्ऋतपश्चिमे ।
तत्र पर्णकुटीं कृत्वा तीर्थं चोत्पाद्य सत्वरम् ।। ४०
तपस्तेपे चिरं कालं तपसा तोषितः शिवः ।
प्रादुर्भूय वचः प्राह सर्वं ब्राह्मणपुङ्गवम् ।। ४१
किं तेऽभीष्टं प्रदास्यामि तपसा तोषितोऽस्म्यहम् ।
इत्युच्यमानस्सर्वस्तं प्रणम्य परया मुदा ।। ४२
नत्वा स्तुत्वा च विविधैस्स्तोत्रैः प्रांजलिरब्रवीत् ।।
सर्वः-
देवत्वं मे प्रदत्वाऽदौ पश्चान्मुक्तिं च देहि मे ।। ४३
मयात्रोत्पादितं तीर्थं मन्नाम्ना प्रथितं भवेत् ।
अत्र मन्नामके तीर्थे यस्स्नाति मनुजो भुवि ।। ४४
देवत्वमाप्नुयात्तस्मिन् जन्मन्येवाबलापि वा ।
एवमुक्तस्तथेत्युक्त्वा श्री वाञ्छ्येशो दयानिधिः ।। ४५

पश्चिमाभिमुखे लिङ्गे स्वीयेऽन्तर्धानमाप ह ।
तदाप्रभृति तत्तीर्थं सर्वतीर्थमिति स्मृतम् ।। ४६
सर्वतीर्थस्य माहात्म्यमुक्तं ते मुनिसत्तम ।
इतः परमपि ब्रह्मन् प्रष्टव्यांशोऽस्ति चेद्वद ।। ४७

इति श्री सांबोपपुराणे श्री वाञ्छ्यमाहात्म्ये पञ्चविंशोऽध्यायः

## ।। अथ चत्वारिंशोऽध्यायः ।।

सुयज्ञः-
पुरा पुराणे ब्रह्माण्डे हयग्रीवमुखाच्छ्रुतम् ।
श्री नागरामदेवानां तीर्थानां चरितं मया ।। १
इदानीमिन्द्रतीर्थस्य माहात्म्यं वद विस्तरात् ।।
सांबः-
पुरा सुयज्ञ देवेन्द्रो गौतमेन महात्मना ।। २
शप्तः श्री वाञ्छ्यनगरे समागत्य सुदुः खितः ।
भगैराक्रान्तदेहस्तु लज्जितोऽधोमुखस्तराम् ।। ३
श्री वाञ्छ्य लिङ्गस्यैशान्यां दिशि तीर्थं विधाय तु ।
तदुत्तरे तु कैलासाल्लिङ्गमाहृत्य शोभनम् ।। ४
प्रतिष्ठाप्य कुमाराभ्यां देव्या सह वृषेण च ।
कैलासादागतत्वाच्च तस्य लिङ्गस्य वै मुने ।। ५
कैलासनाथ इत्याख्यां कृत्वा संपूज्य भक्तितः ।
स्वेनैवोत्पादिते तीर्थे त्रैलोक्यस्थानि यानि तु ।। ६
तानि सर्वाणि तीर्थानि समावाह्य शतक्रतुः ।
तस्मिन् कालत्रये स्नात्वा नित्यकर्म विधाय च ।। ७

श्रीमत्कैलास नाथं च तत्तोयैरभिषिच्य च ।
तपस्तेपे च नितरां तत्र शापविमुक्तये ॥ ८

सुयज्ञः-

स्थितायां गुप्तगङ्गायां हेतुना केन वृत्रहा ।
विनिर्ममे पृथक्तीर्थमैशान्यां दिशि मे वद ॥ ९

साम्बः-

योन्याक्रान्तशरीरत्वाद्गुप्तगङ्गानिमज्जने ।
अनर्हत्वात्पृथक्तीर्थं कृतवा नालयाद्बहिः ॥ १०
तत्रैव सुचिरं कालं तपस्तेपेऽतिदुष्करम् ।
तपसा तस्य सन्तुष्टः श्रीवाञ्छ्येशो दयानिधिः ॥ ११
प्रसादाय मतिं चक्रे देवेन्द्राय तपस्विने ।
हंसे मिथुनराशिस्थे तारे त्वैन्द्रे च पर्वणि ॥ १२
प्रादुरासीन्महादेव्या साकं वृषभमास्थितः ।
तं दृष्टा सांबमीशानं श्रीवाञ्छ्येशं दयानिधिम् ॥ १३
नत्वा परमया भक्त्या स्तुत्वा स्तोत्र शतैरपि ।
प्रार्थयामास देवेन्द्रः स्वहृदिस्थं मनोरथम् ॥ १४
स्वामिन्नज्ञानतोऽहल्यां दृष्ट्वा मोहमवाप्य तु ।
असन्निधौ मुनेस्तस्य बलात्सङ्गत्य तामहम् ॥ १५
निर्गच्छति मयि त्रस्ते समागाद्गौतमो मुनिः ॥
विस्रस्त वस्त्रचिकुरां निर्मृष्टाधरपल्लवाम् ॥ १६
दृष्ट्वाऽहल्यां मुनि श्रेष्ठः कोपात् प्रस्फुरिताधरः ।
उवाच वेपमानाङ्गीमहल्यां केन धर्षिता ॥ १७
वद तत्त्वं भयं त्यक्त्वा तं जानामि यथातथम् ।
स्वामिन्न जाने को वेति लोचनैर्बहुभिर्युतः ॥ १८

बलात्संगम्य मां भीत्या निरगात्स इतोऽधुना ।
इति तस्या वचः श्रुत्वा ज्ञानदृष्ट्या विचार्य माम् ।। १९
शशाप गौतमः कोपान्मद्द्वेषेण गरीयसा ।
मामनादृत्य मद्भार्यामियासीत्काममोहितः ।। २०
तस्य नेत्राणि यावन्ति शरीरे सन्ति तानि तु ।
भगानि स्युः सुरेन्द्रस्य मदगर्वापहाय च ।। २१
एवं शप्तो मुनीन्द्रेण योन्याक्रान्तकलेबरे ।
चिन्तिते मयि दुःखेन वागाकाशसमुद्भवा ।। २२
प्रावादीन्मां शचीनाथ त्यज चिन्तां दुरत्ययाम् ।
आराधय श्रीवाञ्छ्येशं भगान्येतानि तेऽचिरात् ।। २३
नश्यंति नात्र सन्देह इत्युक्त्वा विरराम ह ।
तच्छ्रुत्वात्रागमं देवैरविज्ञातो मुदान्वितः ।। २४
अभीष्टमखिलं लब्धं तव सन्दर्शनान्मम ।
मां पालय महादेव भवन्तं शरणागतः ।। २५
शापादस्मान्मोचयित्वा कृतार्थं कुरु मां प्रभो ।
एवमुक्तस्तु वाञ्छ्येशः प्रत्युवाच पुरन्दरम् ।। २६
मां पालयेति यत् प्रोक्तं भवता नाम मे भवेत् ।
मांपालकेश्वरेत्ये तन्नाम्ना मां स्तुहि वृत्रहन् ।। २७
मत्पुण्यपुष्करिण्यां तु स्नाहि शापाद्विमुच्यसे ।
तव देहस्थितान्यद्य भगानीह मदाज्ञया ।। २८
नेत्राणि स्युर्यथापूर्वं मम कैङ्कर्यमाचर ।
एवमुक्त्वा तु श्रीवाञ्छ्ये स्वयं लिङ्गे तिरोहितः ।। २९
ततः स्नात्वा मुक्तशापः पुनः प्राप्तेक्षणो वृषा ।
सन्तोषं परमं प्राप्य शच्या साकं सुरैरपि ।। ३०

विश्वकर्मा विनिर्माय सोमास्कन्दं सुरेश्वरः ।
कुमारमपि चण्डेशमन्यानुत्सवविग्रहान् ॥ ३१
कारयित्वा यथाशास्त्रं शिल्पज्ञैर्दृष्टकर्मभिः ॥ ३२
शैवाचार्यैः प्रतिष्ठाप्य सुमुहूर्ते शुभे दिने ।
स्वस्य नामाकरोत्तस्य सोमास्कन्दस्य वज्र धृत् ॥ ३३
देवनायक इत्येव देवानां सन्निधौ ततः ।
तरणौ यमराशिस्थे ध्वजारोहणपूर्वकम् ॥ ३४
आज्येष्ठमश्विन्यारभ्य सोऽष्टादशदिनावधि ।
उत्सवं कारयामास वाहनोत्सवपूर्वकम् ॥ ३५
कृत्वा रथोत्सवं सम्यक्परस्मिन् दिवसे मुदा ।
श्री देवयोगेऽवभृथस्नानं देवैर्मुनीश्वरैः ॥ ३६
कृत्वा तु सोमास्कन्देशं देव नायक नायकम् ।
महाभिषेक नैवेद्यैस्संपूज्य परया मुदा ॥ ३७
तुष्टाव देवराजस्तं श्री वाञ्छ्यधरणीपतिम् ॥ ३८

इन्द्रकृता स्तुतिः-

माजानिवन्द्याय मखान्तकाय मत्स्याक्षिभूषाय मदापहाय ।
महाद्रिकोदण्डधराय तस्मै मांपालकेशाय नमः शिवाय ॥ ३९
मैनाकसंपूजित पादुकाय मन्दाकिनीमण्डितमस्तकाय ।
मयूरवाहार्चितपादुकाय मांपालकेशाय नमः शिवाय ॥ ४०
मृगाङ्कचूडाय मृकण्डुपुत्रप्राणप्रदानाय मृडाय तस्मै ।
मृगेन्द्र चर्मांशुकधारणाय मांपालकेशाय नमः शिवाय ॥ ४१
मुरारिनेत्रार्पितपादुकाय मुग्धेन्दुचूडाय मुदे शिवाय ।
मूलाङ्कुरायाखिल देवतानां मांपालकेशाय नमः शिवाय ॥ ४२
मारासुहाराय महाभुजाय मातङ्गचर्मांबरधारणाय ।
महोक्षवाहाय मदिष्टसिद्ध्यै मांपालकेशाय नमः शिवाय ॥ ४३

इत्येवं कृतवान्पञ्चरत्नस्तवमतन्द्रितः ।
एवं स्तुतवतीन्द्रेऽहो मुदा मांपालकेश्वरः ।। ४४
प्रादुर्भूयाह वृत्रारे त्वत्प्रणीतस्तवेन मे ।
चित्तं प्रसन्नमभवत्तवेष्टं प्रार्थयस्व मत् ।। ४५
इत्थमुक्तः शचीजानिर्वव्रे वरमनुत्तमम् ।
मया कृतेन स्तोत्रेण त्वां त्रिसंध्यं स्तुवन्ति ये ।। ४६
तेऽभीष्टमखिलं लब्ध्वा भोगान्भुक्त्वेह पुष्कलान् ।
अन्ते भवत्प्रसादेन मुक्तास्संसृतिबन्धनात् ।। ४७
त्वय्येव विलयं यान्तु वरमेवं ब्रवीहि मे ।
पुनरेकं वरं देहि कृपया मम शङ्कर ।। ४८
उत्पादिते मया तस्मिन्तीर्थे वज्रायुधेन ये ।
ज्येष्ठमासि सिते पक्षे मत्तारे मदभीष्टदे ।। ४९
निमज्ज्य त्वां निषेवन्ते भक्त्या संपूज्य सादरम् ।
कैलासनाथं संपूज्य भक्त्या परमया युताः ।। ५०
मत्पञ्चरत्नस्तोत्रेण स्तुवन्ति त्वां नरा भुवि ।
तेऽभीष्टमिह संप्राप्य शिवलोके वसन्तु ते ।। ५१
तथैवास्त्विति स प्रीत्या तस्मै दत्वा वरं मुदा ।
तिरोधानं गतः स्वीये लिङ्गे श्रेष्ठतमे शिवः ।। ५२
तदाप्रभृति तत्तीर्थं इन्द्र तीर्थमिति स्मृतम् ।
ततस्सुरेन्द्रः संप्राप्य पौर्विकं रूपमात्मनः ।। ५३
सन्तोषं परमं लेभे शच्या सह महामुने ।
उक्तं तवेन्द्रतीर्थस्य माहाम्यं संभवं च ते ।।
इतः परं ते प्रष्टव्यमस्ति चेत् पृच्छ मां पुनः ।। ५४

इति श्री सांबोपपुराणे श्री वाञ्छमाहात्म्ये षड्विंशोऽध्यायः



## ।। एकचत्वारिंशोऽध्यायः ।।

सुयज्ञः-

सांब सर्वकलाभिज्ञ सर्वशास्त्रार्थकोविद ।
त्वत्तः श्रुतान्यशेषाणि प्रा यश्चित्तानि सादरम् ।। १

माहात्म्यं गुप्तगङ्गाया भानुवारस्य वै मुने ।
प्राशस्त्यं केन संप्राप्तं श्रीवांछ्ये मुक्तिदायके ।। २

काशीसमानस्थानानि भूलोके गिरिजापतेः ।
सह्यसागरपर्यन्तं षट्सहस्राणि संति हि ।। ३

तेषु क्षेत्र वरिष्ठेषु श्री वाञ्छ्ये केन हेतुना ।
ब्रह्महत्यादिपापानामन्येषाञ्च द्विजोत्तम ।। ४

प्रायश्चित्तं परं प्रोक्तं मुनितीर्थस्य मज्जनम् ।
प्रथमे ब्रह्महा शुध्येद् द्वितीये मद्यपस्तथा ।। ५

स्वर्णस्तेयी तृतीये तु गुरुतल्पी चतुर्थके ।
इति श्रुतं मया पूर्वं संक्षिप्य तव वक्त्रतः ।। ६

इदानीं ब्रूहि विस्तार्य श्रोतुर्मे मुनिपुङ्गव ।

साम्बः-

साधु पृष्टं त्वया विप्र धर्मैककृतबुद्धिना ।। ७

लोकोपकरणार्थाय इदं प्रश्नं हि विस्तृतम् ।
भानुवारस्य माहात्म्यं पुरा वृत्तं सहेतुकम् ।। ८

प्रवक्ष्यामि मुनिश्रेष्ठ काश्याधिक्ये च मुक्तिदे ।
पूर्वं दक्षाध्वरे देवः प्रकाशात्मा प्रतापनः ।। ९

कृत्वा द्रोहं यदज्ञानाच्छिवस्य परमात्मनः ।
तच्छैथिल्येन मनसः जडत्वं प्राप भास्करः ।। १०

शिवविद्यागुरुद्रोहं सुमहापातकं किल ।
विचिन्त्य भगवान्सूर्यो मार्ताण्डोऽतीव दुःखितः ।। ११

देवसंदिष्टवचसा श्री वाञ्छ्यं प्राप भूसुर ।
तप्त्वा तपांसि घोराणि दिव्यवर्षसहस्रकम् ।। १२
द्रोहान्मुक्तोऽभवत्सूर्यः श्री वाञ्छ्येश प्रसादतः ।
तदाप्रभृति विप्रेन्द्र श्री वाञ्छ्ये मुनितीर्थके ।। १३
भानुवारस्य महिमा ह्यूर्जे मासि प्रकाशिता ।।
सुयज्ञः -
सर्वज्ञः सर्वलोकेशः सर्वसाक्षी जितेन्द्रियः ।। १४
मोहतः परमेशस्य ह्यपराधं करोति हि ।
कथं वा कृतवान्दक्षः पितामहसुतोऽपि सन् ।। १५
देवं विहाय परमं यज्ञेशं यज्ञमादरात् ।
एतद्विस्तार्य भगवन् ब्रूहि मे मुनिपुङ्गव ।। १६
सांबः -
देव्याः स्वयंवरे पूर्वं दाक्षायण्याः पिनाकधृक् ।
अनुज्ञाप्य च देवीं तां स्वसुतामपि निन्दयत् ।। १७
देवानां पुरतो दक्षः कोपात्प्रस्फुरिताधरः ।
निन्दापूर्वमिदं वाक्यमुवाच प्रहसन्निव ।। १८
दक्षः -
निर्वाणी निष्ठुरः क्रूरोऽशुचिर्मूलविवर्जितः ।
एको रुद्रो न द्वितीयस्तथा बंधुविवर्जितः ।। १९
श्मशाननिलयः क्षीबो निर्धनो भैक्षकोविदः ।
भूतप्रेतपिशाचाद्यैस्सेवितो निर्गुणोऽपि सन् ।। २०
मुण्डमालां शरीरे तु धृत्वा नटति दुर्मतिः ।। २१
एवं विनिन्द्य बहुधा स तु ब्रह्मसूनुः दक्षोऽप्ययं त्रिदशपुङ्गवसंघमध्ये ।
सर्वान्विसृज्य सुरसंघमुनीन्द्र दैत्यान् अण्डाधिपत्यमकरोद्दिवि भोगपूर्वम् ।।
२२

तदाप्रभृति विप्रेंद्र शिवद्वेषः कृतः खलु ।
एवं स्थितेपि दक्षेऽपि ब्रह्मा ब्रह्मविदां वरः ॥ २३

यष्टुमारभमाणस्तु सर्वान्देवानथाह्वयत् ।
यज्ञे प्रवृत्ते तुमुले ऋषिसङ्घैः समावृते ॥ २४

सर्वक्रतुवरिष्ठेऽथ ऋत्विग्भिर्हवने कृते ।
हविर्भागान् समादाय विधाता यज्ञकर्मणि ॥ २५

प्रदातुकामस्तानाह रुद्राहुति मतन्द्रितः ।
ब्रह्मा-
प्राप्ता रुद्राहुतिर्देवा ह्यग्रयं रौद्रमिदं हविः ॥ २६

यज्ञेश्वराय शर्वाय दातव्यमनसूयया ।
पितृवाक्यं समाकर्ण्य तदा दक्षः प्रजापतिः ॥ २७

अग्रहस्तं विधून्वान इदं वचनमब्रवीत् ।
न दातव्यं हविश्शुद्धं रुद्रायाशुचये महत् ॥ २८

अन्यं वृणीष्व यज्ञेऽस्मिन् हविर्भागप्रतिग्रहे ।
इति वाक्यं सावमानं श्रुत्वा पुत्रेण भाषितम् ॥ २९

वेपमानो मुहुर्भीत्या दक्षं वचनमब्रवीत् ।
न वक्तव्यं त्वया दक्ष बालिशत्वाद्विकत्थसे ॥ ३०

अध्वरेशं महादेवं तिरस्कृत्य तु मूढधीः ।
इति धिक्कृत्य दक्षं तं नंदिमाहूय पद्मजः ॥ ३१

रौद्रीयं भागमादाय तस्य हस्ते ददौ मुदा ।
साधु साध्वित्यभाषन्त सभ्यास्सर्वे मरुद्गणाः ॥ ३२

एतस्मिन्नन्तरे दक्षः कोपात् प्रचलितेंद्रियः ।
हस्ते हस्तं प्रपीड्याथ ब्रह्माणं वाक्यमब्रवीत् ॥ ३३

मया तु क्रियते यज्ञो मेरोरुत्तरपार्श्वतः ।
रौद्रीयं हविरन्यस्य दीयते तु मया बलात् ।। ३४
तत्कर्मफलसाद्गुण्यं प्राप्नुयाम सुखेन वै ।
इति निर्भर्त्स्य जनकं कोपमाहारयत्तदा ।। ३५
यज्ञवाटं विसृज्याशु सह सर्वैर्मरुद्गणैः ।
स्वपुरं प्राप्य देवादीनृषीनन्यान् द्विजोत्तमान् ।। ३६
आहूय मन्त्रिभिस्सार्धं यष्टुं बुद्ध्या प्रवर्तयत् ।
गङ्गापुष्करिणीतीरे नानावृक्षसमाकुले ।। ३७
कल्हारकुमुदामोदे नानारत्नविराजिते ।
शुचौ देशे विराजन्तं यज्ञवाटं प्रकल्प्य च ।। ३८
स्फाटिकै राजतैः शृङ्गैः काञ्चनैस्तोरणैरपि ।
मुक्तादामविराजद्भिः प्रतोलीभिर्विराजितम् ।। ३९
हर्म्यं प्रासादसंबाधं नैकध्वजसमाकुलम् ।
दिवि स्वर्गोपमं साक्षाद्यज्ञवाटं चकार सः ।। ४०
सर्वोपकरणैः पूर्णं सर्वौषधिसमावृतम् ।
यज्ञवाटं प्रविश्यैव ऋषिसङ्घानथाह्वयत् ।। ४१

इति श्री सांबोपपुराणे श्री वाञ्छ्यमाहात्म्ये सप्तविंशोऽध्यायः ।।

## ।। द्विचत्वारिंशोऽध्यायः ।।

सांबः–

ततो विलोक्य तां शालां दक्षो लोकेषु विश्रुतः ।
स्रुक्स्रु वादीनि पात्राणि यागोपकरणानि च ।। १
कल्पवृक्षं कामधेनुं निधिं चिन्तामणिं तथा ।
आगतानां दापयितुं वस्त्राण्याभरणान्ययम् ।। २

ततस्तु प्रेषयामास ब्रह्मविष्णुमुखानपि ।
बोधयित्वा पुनश्शीघ्रमायातं निकटं द्विजाः ।। ३
अथ विष्णुविधींद्राद्या देवाश्च ऋषिसत्तमाः ।
सूर्याचन्द्रमसौ दैत्यास्सर्वेऽपि स्वबलैस्सह ।। ४
स्वपत्नीभिश्च सन्तुष्टा वीक्षितुं सहसाऽऽगताः ।
तेषान्तु पुरतो गत्वा ब्रह्मविष्णू ह्युभावपि ।। ५
तोषयित्वा यथान्यायं स्थापयित्वा वरासने ।
आसनेषु ततस्तान्वै व्यवस्थाप्य स्वयं पुनः ।। ६
देवतानां च सर्वेषां मध्ये तस्थौ तदा द्विज ।
लक्ष्मीसरस्वतीन्द्राण्यो याश्चान्या देवयोषितः ।। ७
ऋषीणां पत्न्यश्चापि सर्वाश्च सुमनोहराः ।
प्रविश्य वेदवत्यास्तु गृहं परमशोभनम् ।। ८
कृतस्नानोपचारस्तु तया च परया मुदा ।
दक्षस्तु प्रेषितान्दूतानागतान् प्रेक्ष्य सन्मुखः ।। ९
के वाऽत्रानागता दूता इति पृष्टा वचोऽब्रुवन् ।
अगस्त्यस्तपतां श्रेष्ठो नारदोऽत्र प्रभो महान् ।। १०
सनकाद्याश्च ऋषयो वेदवेदान्तपारगाः ।
दधीच्यत्रिर्वसिष्ठश्च पराशरमुखा अपि ।। ११
दुर्वासास्तपतां वर्यो दूषयित्वा जगत्प्रभुम् ।
भवत्क्रतुं भवन्तं च नाययुस्ते तपोधनाः ।। १२
इति तेषां वचः श्रुत्वा दक्षश्चापि तदाऽहसत् ।
रुद्रभक्ता इमे सर्वे नागतास्तत एव ते ।। १३
माऽऽ गच्छन्त्विति तान् सर्वान्धिक्कृत्य च विनिन्द्य च ।
तदा दधीचिः शिष्यैश्च प्रशिष्यैश्चागतोऽधुना ।। १४

सहोदरो महात्माऽयं सर्वैरनुचरैस्सह ।
मान्द्रष्टुं रुद्रभक्तोऽयं न भवत्यत एव हि ॥ १५
मद्भीत्या चागतो नूनमिति निश्चितमानसः ।
आसनं कल्पयामास शिष्याणामपि भूसुर ॥ १६
तदा दधीचिस्तं वीक्ष्य ह्यासनं भवता कृतम् ।
किमर्थमिति चापृच्छत् स्फुरद्गंभीरवागयम् ॥ १७

इति श्री सांबोपपुराणे श्रीवाञ्छ्यमाहात्म्ये अष्टाविंशोऽध्यायः

## ॥ अथ त्रिचत्वारिंशोध्यायः ॥

सांबः-

अथोवाच ऋषिं दक्षो वीक्ष्य तं तपतां वरम् ।
मत्कन्यापाणि सङ्ग्राहं कृत्वा पूर्वं त्रिलोचनः ॥ १
मध्ये कल्याणमुच्छिद्य गत्वा तु कुटिलक्रियः ।
पुनरागत्य चौर्येण गृहीत्वा तामिमामयम् ॥ २
गतवान् क्रूरकर्माऽयं रुद्रो भूतभयङ्करः ।
तथापि तस्य कैलासे वीक्षितुं तावुभावहम् ॥ ३
गतवानस्मि सहसा तत्परीहारवर्तिना ।
अपराधः कृतोऽस्माकं हुङ्कारवचनैरहो ॥ ४
मायया मोहयित्वाऽयं मम पुत्रीं समीपगाम् ।
कृत्वा तु विमुखीं तत्र वर्तते परिचञ्चलः ॥ ५
तदर्थं ब्रह्मयागेऽस्य निरुद्धं च हविर्मया ।
अदत्वा प्रथमं यज्ञे हविरस्मै यजन्ति ये ॥ ६
तेषां शिरांसि छिन्नानि विशीर्णानि भवन्त्विति ।
उक्त्वा कोपाकुलश्शीघ्रं ययौ नन्दी समुत्थितः ॥ ७

नन्दिनो वचनं श्रुत्वा भीतास्ते सुरसत्तमाः ।
न कुर्वन्ति तदारभ्य यागं भीता विना हरम् ॥ ८

अहमेष पुनस्तेषां अगणय्य वचोऽस्य च ।
करोमि रुद्रं मुक्त्वा तं यागं परमपावनम् ॥ ९

तदर्थममरास्सर्वे मयाऽऽहूतास्तपोधनाः ।
तदेतस्य वचःश्रुत्वा दधीचिस्तपतां वरः ॥ १०

हासं कृत्वा तदा प्राह करावास्फाल्य कोपतः ।
त्वत्पुण्यमखिलं दक्ष कोपायैवाभवत्किल ॥ ११

अध्वरेशं महादेवं मुक्त्वा दक्ष क्रतुं भवान् ।
कर्तुमिच्छति मोहेन महता सर्वशास्त्रवित् ॥ १२

ब्रह्मविष्णुमुखान्देवान् पशून् सृष्ट्वा महेश्वरः ।
कल्पयित्वा स्थितिं तेषां संहरिष्यति मूलतः ॥ १३

सर्वेषां जनकश्शंभुः परमात्मेति विश्रुतः ।
हव्याशो हविराकारो जनको जातवेदसः ॥ १४

कर्ता यज्ञस्य देवोऽयं रक्षकोऽयं जगत प्रभुः ।
शिव एव हि देवानां नान्योऽस्तीति वदंति हि ॥ १५

अस्ति चेदत्र यज्ञेशस्समुत्तिष्ठतु मत्पुरः ।
अनेन दत्तमैश्वर्यं विष्ण्वादीनां पिनाकिना ॥ १६

सर्वकर्ता महादेवो नास्य कर्ताऽस्ति कुत्रचित् ।
शिवो महेश्वरः शंभुर्नीलग्रीवस्त्रिलोचनः ॥ १७

अन्तर्यामी परं ब्रह्म परात्परतरश्च सः ।
सर्वेष्वेतेषु देवेषु वरीयान् ब्राह्मणो ह्यसौ ॥ १८

अध्वरेशं महादेवं होतारं रुद्रमव्ययम् ।
मुक्त्वाऽन्यान्शाल्मलीपुष्पतुल्यांस्तुच्छफलप्रदान् ॥ १९

वेदमार्गं परित्यज्य किं वसेत्कुपथे भवान् ।
अतोऽस्य तव यागस्य महान्विघ्नो भविष्यति ॥ २०
आसन्नस्तु विनाशोऽयं भवतः सत्यमुच्यते ।
भीषाऽस्मात्सर्वदा वायुर्वाति चोदेति भास्करः ॥ २१
ऊर्ध्वं ज्वलति वह्निश्च नाकं रक्षति वृत्रहा ।
कालकालाय देवाय सर्वदा चित्स्वरूपिणे ॥ २२
तस्मै भगवते दक्ष ह्यपराधः कृतस्त्वया ।
तस्मात्त्वमपि यज्ञेऽस्मिन्यज यज्ञेश्वरं शिवम् ॥ २३
स एव भगवांस्त्वां च दक्ष रक्षति नित्यशः ।
अन्यथा चेत्करोषीह यज्ञेऽस्मिन् ब्रह्मणस्सुत ॥ २४
छिन्नं तव शिरस्सद्यो भविष्यति न संशयः ।
एतैश्च सकलैर्देवैर्भोक्तुमभ्यागतैर्हविः ॥ २५
यूयं विप्राधमास्सर्वे अशास्त्रासक्तमानसाः ।
शिवद्रोहपरा नित्यं शिवार्चनपराङ्मुखाः ॥ २६
नरकेषु च सर्वेषु पतिष्यथ च दुर्गताः ।
शपित्वैवमृषि श्रेष्ठः शिष्यैस्साकमथेश्वरम् ॥
ध्यात्वा हृत्पद्मनिलयं स्वाश्रमं प्रययौ द्विजः ॥ २७

इति सांबोपपुराणे श्री वाञ्छ्यमाहात्म्ये एकोनत्रिंशोऽध्यायः ॥

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

सांबः–

गते ऋषिवरे तस्मिन्दक्षस्य तु दुरात्मनः ।
बलं कीर्तिर्धृतिर्वीर्यं संपदाद्याश्च निर्ययुः ॥ १

ततः प्रवृत्ते यज्ञेऽस्मिन्दक्षो दुष्टो मदोत्कटः ।
दत्वा दानानि विप्रेभ्यो ह्यन्नापूपान्यथेप्सितान् ॥ २

अग्निं प्रज्वाल्य तरसा देवानुद्दिश्य मन्त्रतः ।
आहुतीः प्रदौ तेषामानुपूर्व्याद्धविर्भुजाम् ॥ ३

तत् ज्ञात्वा नारदः श्रीमान् कैलासं पर्वतोत्तमम् ।
गत्वा तत्र महादेवं सांबं भक्त्या प्रणम्य च ॥ ४

वृत्तान्तमेतत् प्रोवाच बद्धांजलिपुटो हरम् ।
अध्वरेशाय भवते दक्षो धातृसुतोऽप्ययम् ॥ ५

अदत्वाऽद्य हविर्भागं अन्यदेवान् यजत्यलम् ।
यज्ञेश्वरे त्वयि शिवे विमुखो दुर्मना इति ॥ ६

तदा तद्वचनं गौरी श्रुत्वा विस्मितमानसा ।
प्रणम्य देवमीशानमुवाच परमेश्वरम् ॥ ७

दृष्ट्वा तु यागं देवेश पुनरायामि शीघ्रतः ।
अनुज्ञां कुरु यात्रायै मम सर्वेश्वराधुना ॥ ८

इति गौर्या वचः श्रुत्वा स्मयमानमुखांबुजः ।
कथं गच्छसि कल्याणि त्वामनाहूय मोहतः ॥ ९

दक्षो यस्मान्मुक्त्वाऽन्यान्देवान् सर्वान् यजत्यलम् ।
तत्तत्र तव यात्रा तु निषिद्धा खलु भामिनि ॥ १०

इति शंभोस्समाकर्ण्य दक्षकन्या शिवा वचः ।
पुनः प्राह पितुस्स्नेहा ल्लोकयात्र विधित्सया ॥ ११

क्षमस्व देव दक्षस्य किञ्चितज्ञस्य दयानिधे ।
वीक्ष्य यागमहं तस्य समायास्यामि शीघ्रतः ॥ १२

प्रणनाम महादेवं दण्डवद्विनयेन सा ।
तथेति स महादेवः प्रेषयामास तां शिवाम् ॥ १३

शिवाज्ञया गणास्तस्या विमानं निन्यिरे महत् ।
अनेक कोटिसूर्याभं नानारत्नविचित्रितम् ॥ १४
सर्वालङ्कारसं युक्तमारुह्यैतच्छिवा ततः ।
प्रतस्थे वाद्यघोषेण महता परमेश्वरी ॥ १५
धृतच्छत्राणि भूतानि वृषभध्वजपूर्वकम् ।
धृतायुधानि चान्यानि तथा द्वादश कोटयः ॥ १६
निर्ययुस्तानि सर्वाणि महाकोलाहलारवैः ।
महता संभ्रमेणैव यागशालामियं ययौ ॥ १७
अवरुह्य विमानात् स्वादाप दक्षांतिकं शिवा ।
तदा दक्षस्सुतामेनामवमत्य दुरात्मवान् ॥ १८
अमङ्गलस्तव पतिरविज्ञातकुलोद्भवः ।
अनाचाररतो नित्यमनाहूतस्ततो मया ॥ १९
तद्भार्या त्वं मया नैव आहूता क्रतुसत्तमे ।
तथापि त्वं वृथा ऽऽशाया वशप्राप्ताऽऽगताऽधुना ॥ २०
गच्छ त्वं सहसा पत्युर्गेहं यत्तत् श्मशानकम् ।
इत्युक्तवति दक्षेऽस्मिन् दुराचारे शिवाऽवदत् ॥ २१
सोदर्यो मम सर्वास्तास्त्वया संमानिताः खलु ।
तासां च पतयस्तात तथा सर्वेऽपि मानिताः ॥ २२
अन्येऽपि बांधवास्सर्वे पूजितास्ताः पितः कुतः ।
मत्पतिं माश्च यागेऽस्मिन् त्वं नैव गणयस्यहो ॥ २३
आगतायां मयि तथाऽप्यहो कोपाकुलो भवान् ।
पुनर्गच्छेति वदसि त्वं मामत्र समागताम् ॥ २४
अपराधं मया किं वा वदैतच्छ्रेयसे तव ।
इति गौर्या वचः श्रुत्वा पुनर्दक्षः प्रजापतिः ॥ २५

श्मशाननर्तनपरस्तामसः खलु ते पतिः ।
न जामाता तव पतिर्न पुत्री त्वं च सत्यतः ॥ २६

तासामेव प्रयच्छामि वाञ्छितानि यदृच्छया ।
सर्वदा मां विचार्यैतास्तिष्ठन्ति त्वं न तादृशी ॥ २७

तस्मात्तव पतेर्यागे न दास्यामि हविर्वरम् ।
वेदवाक्येन तस्यापि हविः प्रोक्तं तथाप्यहम् ॥ २८

न दास्येऽविगणय्यैव न वक्तव्यं त्वया वचः ॥ २९

तद्गच्छ तूष्णीं पुरतो मम लज्जां विहाय च ।
इति तस्य वचश्श्रुत्वा तस्थौ गौरी रुषान्विता ॥ ३०

तदा सर्वेऽपि तत्रत्या भीता देवीं समीक्ष्य ते ।
विमलाख्या सखी गौर्यास्तदा तां संप्रणम्य सा ॥ ३१

कोपं संहर देवेशि माता त्वं जगतो ह्यहो ।
त्वत्कोपेन जगत्सर्वं सभयं भवति ध्रुवम् ॥ ३२

उपसंहर कल्याणि कोपमेतद्दुरासदम् ।
इत्युक्त्वा सा पुनर्भूमौ दण्डवत् प्रणनाम च ॥ ३३

तदा दक्षसुता कोपं मुक्त्वा तत्र समीक्ष्य तम् ।
दक्षमेनं दुरात्मानं प्रोवाच वचनं पुनः ॥ ३४

दूषणं देवदेवस्य यत्कृतं दक्ष सांप्रतम् ।
सव्यथं तेन मच्चित्तं नितरामत्र दुर्मते ॥ ३५

मद्दूषणेन न तथा व्यथा मे त्वत्कृतेन हि ।
निरंजनं निराधारं निर्गुणं निरुप्लवम् ॥ ३६

सर्वज्ञं सर्वविद्यानामादिकर्तारमव्ययम् ।
तत्वातीतं शिवं शंभुं शङ्करं प्रणतार्तिहम् ॥ ३७

तामसं प्रोक्तवान्मोहादहो पापं तवेदृशम् ।
सर्वसंहारकर्तृत्वात् स तामस इवाभवत् ।। ३८

तस्मै देयो हविर्भागः स हि पूज्यो न चेतरः ।
तन्नाम परमं यो वा शिव इत्यक्षरद्वयम् ।। ३९

सदा जपति यः पापी जनो मोक्षं स विन्दति ।
यो विनिन्दति सर्वेशं संसारान्मोक्षकारकम् ।। ४०

तस्य पापस्य सहसा समायातं महद्भयम् ।
एवं शिवस्य महिमा श्रूयते हि श्रुतौ तराम् ।। ४१

तस्मात्त्वमपि पापात्मा शिवद्रोहपरायणः ।
विनश्यसि न सन्देहः क्षिप्रेणाद्य शिवाज्ञया ।। ४२

शिवद्रोहे कृते तस्मिन् सुमहत्पातके तथा ।
कर्ता कारयिता श्रोता द्रष्टा चैवानुमोदकः ।। ४३

तत्सङ्गिनश्च ते सर्वे ह्यचिरान्नाशमाप्नुयुः ।
इत्युक्त्वा सा महादेवी योगाभ्यासात्कलेबरम् ।। ४४

त्यक्त्वाऽग्नौ सर्वदेवानां पुरतोऽन्तर्दधे तदा ।
हाहाकारमभूत्सर्वं तुमुलं रोमहर्षणम् ।। ४५

गणाः प्रदुद्रुवुस्सर्वे भयोद्विग्नाः शिवांतिकम् ।
ऊचुः- प्रांजलयस्सर्वे यथावृत्तमवर्णयन् ।। ४६

एतदाकर्ण्य वृत्तान्तं देव्या देहविमोचनम् ।
कोपमाहारयामास महादेवो विषाशनः ।। ४७

संस्मरन्मनसा वीरं वीराणां च भयंकरम् ।
वीरभद्रं महाकायं सर्वलोकैक नाशनम् ।। ४८

तदा जय जयेत्युच्चैः प्रादुरासीद्वदन्नयम् ।
ललाटचण्डनयनवह्निकुण्डान्महेशितुः ॥ ४९

महाद्रि शिखरप्रख्य शिरस्साहस्र संयुतः ।
द्विसहस्र भुजैस्स्थूलैरायतैरतिसुन्दरैः ॥ ५०

खड्ग खेटगदाचक्र वज्रशूलधनुश्शरान् ।
मुसलप्रास नाराचपरशूंश्च करैर्वहन् ॥ ५१

ब्रह्मादिदेवनिकरमुण्ड मालोज्ज्वलाकृतिः ।
आरक्तपृथुलाकारो घोरदंष्ट्रो महाहनः ॥ ५२

नानारत्नौघखचितशिञ्जन्मञ्जीरपादवान् ।
वमद्वह्निचयात्युग्र लोचनत्रि सहस्रकः ॥ ५३

वीरभद्रः प्रण्म्याशु देवदेवं पिनाकिनम् ।
उवाच विनयाद्वीरो देवदेव महा प्रभो ॥ ५४

आज्ञापय भवद्दासं यत्र कुत्र च शङ्कर ।
इत्युक्त्वा विनयेनायं तस्थौ बद्धांजलिः किल ॥ ५५

तदा प्रभुस्समुद्वीक्ष्य वीरभद्रं महाबलम् ।
भद्र वीर महासत्व मदाज्ञापरिपालक ॥ ५६

मुक्त्वा मामधुना दक्षो देवान् सर्वान्यजत्यलम् ।
तत्र गत्वा दुरात्मानं हत्वा च सदसि स्थितान् ॥ ५७

शिक्षां कृत्वाऽमरान् सर्वान्मद्दूषणकुतूहलान् ।
तद्गच्छ शीघ्रं शालां तां निरुध्य वचनान्मम ॥ ५८

इत्युक्तो वीरभद्रस्तु गणैस्सर्वै स्समावृतः ।
विवेश यागसदनं सर्वदेवगणाकुलम् ॥ ५९

प्रविष्टे वीरभद्रेऽस्मिन् यागशालां मनोहराम् ।
तत्पालकान् भटान् सर्वान् हत्वा कृत्वा महारवम् ॥ ६०

कृत्वा कोलाहलारावं ब्रह्माण्डं स्फोटयन्निव ।
दण्डेन ताडयामास विष्णुं वक्षसि वीर्यवान् ।। ६१

तदानीं कौस्तुभं रत्नं पद्मं च तदुरोगतम् ।
भिन्नं पपात शतशो भूमिपृष्ठे द्विजोत्तम ।। ६२

पतित्वा तमसा विष्णुर्मुमोह गतविक्रमः ।
विधातारं ततो मूर्ध्नि मुष्टिनाऽकुट्टयद्विभुः ।। ६३

पपात सोऽपि वेगेन यावत्तूर्णं प्रजापतिः ।
गायत्रीमपि सावित्रीं ब्रह्माणीमपि निर्गताम् ।। ६४

छिन्ननासाकुचाश्चक्रे करवालेन वीरपः ।
ततो देवाः परे भीता दुद्रुवुः सर्वतो बहिः ।। ६५

बहिर्भूतैश्च वीरैस्तु त्रासिताः पुनरन्तरा ।
ततस्तु चंद्रं धावन्तं पादेनाताड्य सत्ववान् ।। ६६

पोथयित्वा यमस्यापि शिरश्चिच्छेद निष्ठुरम् ।
कपोले ताडयामास सूर्यमद्भुतविक्रमः ।। ६७

भग्ना दन्तास्तदा तस्य निपेतुः पृथिवीतले ।
भगस्योत्पाटयामास लोचने द्वे दुरात्मनः ।। ६८

इन्द्रं कोकिलरूपेण निर्यान्तमपि सोऽच्छिनत् ।
अग्नेर्हस्तांश्च रसनां हविर्भोक्तुरखण्डयत् ।। ६९

नासिकामग्निभार्याया नखेन स्वेन चाच्छिनत् ।
मुसलेनायसेनापां पतिं हत्वा महाबलः ।। ७०

अमारयत्ततोवायुं यान्तं परशुना द्विज ।
कुबेरं निजशूलेन पोथयित्वा ननर्द ह ।। ७१

रुद्रास्त्वेकादश तदा त्वीशानभयकंपिताः ।
वीरभद्रं प्रणेमुस्ते प्रणतार्तिं प्रभंजनम् ॥ ७२
तानेतान्वीरभद्रोऽसौ भर्त्सयित्वा मुमोच ह ।
असुरेन्द्रं शरेणायं निरसुं कृतवांस्तदा ॥ ७३
मृगरूपेण धावन्तं यज्ञं यागगृहान्तरे ।
निरुध्य पुरतो गत्वा चिच्छेदास्त्रेण मन्युना ॥ ७४
तदेतत्सर्व मालोक्य दक्षश्चिन्तामवाप्तवान् ।
मयि पश्यति वीरोऽयं यज्ञं देवानमारयत् ॥ ७५
उक्तो हि शङ्करस्यास्य महिमा ब्रह्मणा पुरा ।
तत् ज्ञात्वा देवमीशानं तपः कृत्वा सुदारुणम् ॥ ७६
ऐश्वर्यं प्राप्तवानस्मिन् कृपयास्य महेशितुः ।
यत्क्षात्रबुद्ध्या देवोऽयं मया यज्ञे विनिन्दितः ॥ ७७
क्रियमाणे पुरा यागे ब्रह्मणा जनकेन मे ।
न दातव्यं हविः शंभोरिति कुण्ठीकृतं खलु ॥ ७८
मयाऽपि देवं तं मुक्त्वा समारब्धः क्रतुस्सुरैः ।
दधीचिना वचः प्रोक्तं न श्रुतं हितमिच्छता ॥ ७९
दाक्षायण्या वचः पुत्र्या न श्रुतं सुतरां मया ।
अनर्थ एव देवानां विष्ण्वादीनां मयार्जितः ॥ ८०
कुपितं वीरभद्रं तं दृष्ट्वा कालीं च तादृशीम् ।
आवृतानि च भूतानि ज्ञात्वा गन्तुमशक्नुवन् ॥ ८१
अभीरिव तदा भीतो मौनं तस्थौ द्विजोत्तम ।
वीरभद्रस्समुत्पात्य खड्गमादाय वेगतः ॥ ८२
चिच्छेद तस्य मूर्द्धानं दक्षस्यास्य दुरात्मनः ।
निष्कृतिश्शिवनिन्दाया वीरेणात्रोपपादिता ॥ ८३

अग्नौ प्रक्षेपयामास शिरश्छिन्नं दुरात्मनः ।
तदानीमभवद्भस्म केवलं तद्द्विजोत्तम ॥ ८४
हतं दक्षं ततो दृष्ट्वा तत्पुत्री वेदवल्लिका ।
तत् पुत्रा बान्धवास्सर्वे परिवव्रुस्समन्ततः ॥ ८५
वेदवल्ल्यास्तदाकर्ण्य प्राच्छिनत्परवीरहा ।
अन्येषां च शिरश्छित्वा कन्दुवच्च चकार ह ॥ ८६
देवर्षीणां मनुष्याणां भार्याश्चान्या मनोरमाः ।
यागशालाबहिर्देशे स्थितं सैन्यं दुरासदम् ॥ ८७
हित्वा प्राकारमतुलं प्रविष्टा यागवेश्मनि ।
कृत्वा कोलाहलारावं चक्रुस्ते वीरजा गणाः ॥ ८८
आज्यस्थालीषु केषांचिच्छरीराणि दुरात्मना ।
निक्षिप्य कथयित्वाग्नौ बुभुजुस्सुमनोहराः ॥ ८९
दधुरांत्राणि केषांचिन्माला इव विनिर्मिताः ।
खड्गानामारवं चक्रुः शिवसंकीर्तनं तथा ॥ ९०
पलायनपरानन्यान् सुरान्पादेन पेषयन् ।
मधुक्षीराज्यदध्यादि हवींषि लिलिहंस्तदा ।
मूत्रैरशामयन्वह्नीन् कुण्डस्थान्कोपवैभवात् ॥ ९१
ददर्शुर्यागशालां तां कानि भूतानि कुत्रचित् ।
बिभिदुः कलशान् सर्वांश्चिक्षिपुश्च घटांस्तथा ॥ ९२
बिभिदुः श्येनवेदींश्च कृत्वा कोलाहलं रवम् ।
एवं दक्षस्य कन्याश्च जामातॄन्बान्धवान् द्विजान् ॥ ९३
एवं नानाप्रकारेण हतेष्वेषु दुरात्मसु ।
हते मखे महाविष्णुः प्रणनाम पुनः पुनः ॥ ९४

वीरभद्रं महाघोरं वीराणां प्रवरं द्विज ।
कृपां चक्रे महावीरः प्रसन्नो माधवाय सः ।। ९५
तदन्तरे महादेवः प्रादुरासीद्वृषोपरि ।
तं दृष्ट्वा वीरभद्रोऽसौ महादेवं जगद्गुरुम् ।। ९६
प्रणम्य परया भक्त्या स्तुत्वा स्तोत्रशतैरपि ।
तस्थौ बद्धांजलिपुटः पुरतोऽस्य महेशितुः ।। ९७
तस्थतुश्च महाविष्णु ब्रह्माणौ भयकंपितौ ।
प्रणम्य सांबमीशानं प्रणम्य परमेश्वरम् ।। ९८
तौ तु बद्धांजलिकरौ विधिनारायणावपि ।
कृपामूर्तिं देवदेवमूचतुर्वीक्ष्य तावपि ।। ९९
स्वामिन्नज्ञानतो देव त्वां विना शङ्करं प्रभुम् ।
इमां दशामनुप्राप्ताः सर्वे ह्यत्यन्तगर्हिताः ।। १००
शिवद्रोहमघं क्षान्त्वा पुनरुज्जीवय प्रभो ।
इत्युक्त्वा तौ महादेवं प्रणम्य च पुनः पुनः ।। १०१
तयोर्वाक्यं तदा श्रुत्वा दयासिंधुर्महेश्वरः ।
वीरभद्रं समीक्ष्यैनं बद्धपाणिपुटं पुरः ।। १०२
पुनस्संजीवयस्वैनान्वीरभद्र मदाज्ञया ।
इत्युवाच दयासिंधुस्तदानीं ब्राह्मणोत्तम ।। १०३
ततः शिवाज्ञां शिरसा वहन् वीरस्सुरानिमान् ।
समीक्ष्योज्जीवयामास कृपादृष्ट्या महाबलः ।। १०४
सुप्ता इव तदोत्तस्थुस्सर्वे च निहतास्सुराः ।
अथ ते देवमीशानं सर्वलोकेश्वरं विभुम् ।। १०५
प्रणम्य दण्डवद्भीता भक्त्या परमया युताः ।
नमस्तेऽस्तु महादेव नमो मीढुष्टमाय ते ।। १०६

मुण्डिने जटिने तुभ्यं सर्वरक्षापरायण ।
एवमुक्त्वा तदा देवाः प्रणेमुर्भक्तवत्सलम् ।। १०७
ऊचुः प्राञ्जलयस्सर्वे महादेवं वृषध्वजम् ।
शिव दक्षस्य संहारो भविष्यत्यतिपापिनः ।। १०८
मोहतश्शीघ्रकालेन लयं युगपदेव न ।
कस्त्वां विना महादेव सुराणां खिन्नचेतसाम् ।। १०९
शरण्यश्शङ्करो लोके त्वापन्नार्तिं प्रभञ्जनः ।
पुरा भागीरथीं पुण्यां शिरसा धृतवानसि ।। ११०
सर्वेषामेव देवानां रक्षायै पाणिपल्लवे ।
वह्निमप्यवहश्शंभो विषमप्यपिबः खलु ।। १११
एवमादि भयेभ्यस्तु ह्यस्मान् रक्षितवानसि ।
तस्मात्त्वमेतान् त्राहीश रक्ष नः परमेश्वर ।। ११२
नमस्तेऽस्तु महादेव सर्वरक्षापरायण ।
उज्जीवय महाबाहो दक्षमप्यपराधिनम् ।। ११३
समंत्रशक्ते सर्वज्ञ सर्वभूतहितोद्यम ।
एवं ते प्रार्थयन्देवं भक्त वश्यं कृपानिधिम् ।। ११४
तेषां तद्वचनं श्रुत्वा महादेवः पिनाकधृत् ।
वीरभद्रं समीपस्थमवालोकयदीश्वरः ।। ११५
विज्ञायेङ्गितमीशस्य वीरभद्रः कृपानिधिः ।
आजं शिरस्तु दक्षस्य स्कंधे विन्यस्य पापिनः ।। ११६
प्राणेन योजयामास शिवाज्ञापरिपालकः ।
ततो दक्षस्समुत्थाय त्वरया भक्तिसंयुतः ।। ११७
प्रणम्य वीरभद्रं तं स्मरन्पापमपि स्वकं ।
तस्थौ महत्या भीत्याऽयं कृतांजलिपुटः पुरः ।। ११८

क्षिप्रेण च पुनश्शंभुं दृष्ट्वा सांबं वृषोपरि ।
प्रणनाम भयाविष्टः प्रांजलिर्ब्राह्मणोत्तमः ॥ ११९
कृतार्थोऽस्मि महादेव दर्शनेन तव प्रभो ।
तवावमानजातस्य फलं पापस्य कर्मणः ॥ १२०
भुक्तवानस्मि देवेश क्षमस्व करुणानिधे ।
इति ब्रुवति दक्षेऽस्मिन् ब्रह्मा देवं पिनाकिनम् ॥ १२१
उवाच प्रांजलिर्वाक्यं देवानां पुरतस्तदा ।
स्वामिन्देवगुरोऽयन्तु मार्ताण्डश्चापि विह्वलः ॥ १२२
भग्नदन्तश्च किं देव न शर्म लभतेऽधना ।
प्रसादं कुरु देवेश लोकेऽस्मिन् भास्करो ह्यसौ ॥ १२३
इति सूर्यं समाकृष्य शिवस्य पुरतो द्विज ।
तदादित्योऽपि संवीक्ष्य प्रास्तौत् संसारभेषजम् ॥ १२४
नमस्ते देवदेवेश शंकराय चिदात्मने ।
नीलग्रीवाय शान्ताय पशूनां पतये नमः ॥ १२५
नमो नमः कारणकारणाय विश्वात्मने विष्णुविधीश तुभ्यम्
विश्वस्वरूपाय दिगं बराय वेदान्तवेद्याय विभक्तरूपिणे ॥ १२६
नित्याय शुद्धाय निरंजनाय नादान्तरूपाय नमो नमस्ते ।
इति स्तुतस्सन् प्रणतोऽखिलेशं भूयोऽपि देवं वचनं जगाद ॥ १२७
भगवन्सर्वलोकेश त्वद्भक्तं मां विलोक्य च ।
कृपां कुरु मयि स्वामिन् क्षमस्वेति पुनः पुनः ॥ १२८
भग्नदन्तस्य मे कापि सुखं नायाति विश्वप ।
इति ब्रुवाणं मार्ताण्डं सर्वलोकेश्वरेश्वरः ॥ १२९
प्राह गंभीरया वाचा स्मितपूर्वं महेश्वरः ।
अस्मिन्यज्ञेतु दक्षोऽसौ बहुधा मां व्यनिन्दयत् ॥ १३०

तत्काले चैव भवता त्वपहासः कृतो मम ।
तस्माद्द्रोहकृतो मह्यं निष्कृतिर्नास्ति कुत्रचित् ॥ १३१
मद्द्रोहजातपापस्य प्रायश्चित्तं वदाम्यहम् ।
कवेरजा तटे रम्ये दक्षिणे मम पावने ॥ १३२
श्री गन्धविपिनं नाम स्थानं कलिमलापहम् ।
तस्मिन् तीर्थवरं चास्ति मच्छूलेन विनिर्मितम् ॥ १३३
प्रायश्चित्तविहीनानां पापानां नाशकारणम् ।
आनन्दाख्यं महातीर्थं मुनितीर्थमिति स्मृतम् ॥ १३४
तत्र गत्वा महातीर्थे स्नात्वा कुरु मदर्चनम् ।
पश्चिमाभिमुखं मान्तु तपसा नियमेन च ॥ १३५
त्रिंशद्दिनानि चोर्जेऽस्मिन् विशिष्यान्ते च तत्र हि ।
मल्लिङ्गदर्शनादेव सद्यः पूतो भविष्यसि ॥ १३६
इत्युक्त्वान्तर्दधे शंभुर्मार्ताण्डं प्रति भूसुर ।
तत् श्रुत्वा वचनं शंभोस्सप्तसप्तिः प्रहृष्टधीः ॥ १३७
तदानीमेव निर्गत्य भूकैलासस्थलं ययौ ।
ऊर्जे मासि प्रतिदिनं स्नात्वा यत्तः त्रिकालतः ।
प्रदक्षिण नमस्कारैस्तत्तीर्थस्नानदानतः ॥ १३८
नियमैरुपचारैश्च होमैरन्यैश्च तर्पणैः ।
श्री वाञ्छ्येशं च देवीं च ह्युपास्य तपसि स्थितः ॥ १३९
ततः प्रसन्नो भगवान्महादेवो महेश्वरः ।
मेघगंभीरया वाचा त्वंशुमन्तमथाब्रवीत् ॥ १४०
प्रीतोऽस्मि तव भद्रन्ते वरदोऽहमिहागतः ।
शिवद्रोहकृतात्पापान्मुक्तश्च त्वं सुरोत्तम ॥ १४१

इति देवस्य वचनं श्रुत्वा भानुः प्रसन्नधीः ।
प्रणम्य शिरसा देवं सोमं सोमार्धशेखरम् ।। १४२

बद्धांजलिपुटो भूत्वा ह्युपतस्थे महेश्वरम् ।
ओं नमो भगवते तुभ्यं परात्परतराय च ।। १४३

तत्वातीताय देवाय तत्वज्ञाय नमो नमः ।
ऋताय सत्यरूपाय सत्यधाम्ने नमो नमः ।। १४४

सत्यज्ञानाय शान्ताय शत्रुसंहारकारिणे ।
शुद्धसत्व स्वरूपाय मूलप्रकृतिहेतवे ।। १४५

हिरण्यरेतसे तुभ्यं हरिकेशाय ते नमः ।
एवं स्तुत्वा महादेवं दण्डवत् प्रणनाम सः ।। १४६

विज्ञापनं मे देवेश श्रुत्वा चैतद्विधीयताम् ।
अद्यप्रभृति देवेश ह्यस्मिंस्तीर्थे निमज्जनात् ।। १४७

मद्वासरे विशेषेण ह्यूर्जे मासि सुपावने ।
महापातक युक्ताश्च ह्युपपातकिनोऽपिवा ।। १४८

सद्यः शुद्धा भविष्यन्ति त्वत्कटाक्षेण वीक्षिताः ।।

इति दिनकरवचो निशम्य देवो
मुदितमनाः परमं जगाद वाक्यम् ।
सकलजनहिताय पृच्छसि त्वं
गलितमलोऽस्तु मदाज्ञया जनोऽपि ।। १४९

इत्युक्त्वान्तर्दधे शंभुर्भगवान् फाललोचनः ।
तदा सन्तुष्टहृदयः प्रकाशात्मा दिवाकरः ।। १५०

ययौ स्वधाम देवानां पुरतो ब्रा ह्मणोत्तम ।
तदाप्रभृति तत्तीर्थे भानुवारे निमज्जनात् ।। १५१

ब्रह्महत्यादिपापानां प्रायश्चित्तं विदुर्बुधाः ।
यज्ञाद्दानाच्च तपसो गोसहस्र प्रदानतः ॥ १५२
प्राशस्त्यं भानुवारस्य श्री वाञ्छ्य मुनितीर्थके ।
यस्स्नाति भानुवारे तु वृश्चिकस्थे दिवाकरे ॥ १५३
सर्वपापविनिर्मुक्तो भवेन्नात्र विचारणा ।
वर्णाश्रमपरिभ्रष्टाः पितृमातृ विदूषकाः ॥ १५४
सदाचारविहीना श्च ये च पातकिनोऽपरे ।
श्री वाञ्छ्ये गुप्तगङ्गायां भानुवारे च मज्जनात् ॥ १५५
सद्यः पूता भवेयुस्ते स्वर्गलोकं प्रयांति च ।
बहुनाऽत्र किमुक्तेन कृत्तिकाभानुवासरे ॥ १५६
नराणां पापिनां लोके स्नानं सर्वार्थसिद्धिदम् ।
नार्थवादं वदामीह सर्वलोकोपकारकम् ॥ १५७
आख्यातमेतदखिलं यत्पृष्टं ते द्विजोत्तम ।
तत् श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ १५८
भानुवारस्य महिमा श्रीवाञ्छ्यमुनितीर्थके ।
विश्रुतो ब्राह्मणश्रेष्ठ ह्यादित्यस्य प्रसादतः ॥ १५९
सहस्रार्धोदयसमः कृत्तिकाभानुवासरः ।
तत्र स्नात्वा पुण्यतीर्थे भानुवारे विशेषतः ॥ १६०
तांबूलं तण्डुलं वापि फलदानं करोति यः ।
इह भुक्त्वाऽखिलान्भोगानन्ते कैलासमश्नुते ॥ १६१
इदं पवित्रं पापघ्नं सर्वक ामसमृद्धिदम् ।
सर्वपापक्षयकरं सर्वयज्ञफलप्रदम् ॥ १६२
नास्तिकाय शठाया थ नैव वाच्यं विशेषतः ।
जातिभ्रष्टोऽतिपापी परधनपरदारापहर्ताऽतिमूर्खो

विद्यासंपद्विहीनः पितृगुरुमहतां निन्दकोऽधर्मयुक्तः ।
सद्यश्शुद्धो भवेत्तं सकल मुनिजनैराश्रितं पुण्यलोकं श्रुत्वा
माहात्म्यमेतत्सकलदुरितहं संप्रहृष्यन् स याति ॥ १६३

इति श्री सांबोपपुराणे श्री वाञ्छ्यमाहात्म्ये त्रिंशोऽध्यायः ॥

## ॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥

(शिवरहस्यस्य सप्तमांशतः)

स्कन्दः -

जीवन्मुक्तिप्रदं स्थानं श्री वाञ्छ्यं पुण्यवर्धनम् ।
पापं च नाशमाप्नोति कृतं पुण्यं विवर्धते ॥ १

तत्र पञ्चाक्षरं कर्णे सतारं दिशतीश्वरः ।
वसतां तत्स्थले देवो मरणावसरे ह्यसौ ॥ २

भैरवोऽपि च तत्रास्ते निर्व्यापारोऽथ शिक्षिता ।
दण्डं पुरो विधायैव ध्यायन्नास्ते महेश्वरम् ॥ ३

आसीनभैरवो नाम्ना श्री वाञ्छ्यक्षेत्र रक्षकः ।
शिवक्षेत्रमृतानान्तु न यमो यमकिङ्कराः ॥ ४

प्रधर्षयन्ति च नरान् पापानपि विशेषतः ।
तेषु पापिषु शिक्षायै भैरवोऽसौ नियोजितः ॥ ५

शिवेन सर्वक्षेत्रेषु काश्यां श्री कालभैरवः ।
तस्मात्काश्याधिकं क्षेत्रं नात्र भैरवयातना ॥ ६

श्री वाञ्छ्येश प्रसादेन पापनाशो नृणामिह ।
कुर्वतां पुण्यजालानि विवर्धन्ते पदे पदे ॥ ७

शिवद्रोहं विना सर्वं नाशं याति च पातकम् ।
शिवद्रोहवतो नैव मृतिलाभोऽत्र सिद्ध्यति ॥ ८
व्याजेन केनचित्तस्य क्षेत्रादुत्सारणं भवेत् ।
कटकंबलयोर्वास्य खट्वायां वा मृतिर्भवेत् ॥ ९
देशान्तरकृतं पापं शिवद्रोहाख्यमत्र च ।
श्री वाञ्छ्ये वृश्चिके मासि नश्येत् स्नानादि कर्मतः ॥ १०
किं बहूक्त्या मृतस्यात्र मुक्तिरेव भवेद्ध्रुवम् ।
तस्माद्व्यापाररहितस्समासीनोऽत्र भैरवः ॥ ११
सर्वेषामपि पापानां प्रायश्चित्तं श्रुतौ स्मृतौ ।
निर्दिष्टं हि पुराणज्ञैर्मुनिभिश्च महत्तमैः ॥ १२
शिवद्रोहस्य चैतस्य प्रायश्चित्तं मुनीश्वरैः ।
महत्तमैर्न निर्दिष्टं शास्त्रे वेदेऽपि वा क्वचित् ॥ १३
शिवद्रोहीह घोरेषु नरकेषु च यातनाः ।
अनुभूयैव कल्पानामनन्तानि निरन्तरम् ॥ १४
तत्रैव पच्यते कष्टं हरद्रोहस्य वैभवम् ।
कर्ता कारयिता श्रोता वक्ता द्रष्टा च तत्प्रियः ॥ १५
शिवद्रोहप्रसङ्गे तु षडेते सर्वनारकाः ।
अविचार्य शिवद्रोही वध्य इत्युच्यते बुधैः ॥ १६
शिवद्रोहवतस्तस्मात् श्री वाञ्छ्ये पूर्वपुण्यतः ॥ १७
तारोपदेशद्वाराऽस्य मुक्तिरेव न संशयः ।
श्री वाञ्छ्येशोत्तरे भागे गुप्तगङ्गा व्यवस्थिता ॥ १८
गङ्गाद्यास्सकला नद्यस्तीर्थे सन्निहितास्तदा ।
तत्र स्नात्वा नरो दृष्ट्वा श्री वाञ्छ्येशं स मुक्तिभाक् ॥ १९

श्रियं वाञ्छन् हरिः पूर्वं तपसा तोष्य शङ्करम् ।
श्रियं लेभे पुरा विष्णुर्दैत्यानां च वशांगताम् ॥ २०
तदा श्री वाञ्छ्यनाथं वै समभ्यच्चर्यास्तुवद्धरिः ।
ओं जय जय देव महेश शङ्कर त्रिदशानामवन प्रभो शरण्य ।
गरधारिन् गणाधिप चन्द्रमौले सततं मामव मङ्गलांबिकापते ॥ २१
इत्थं स्तु वन्महेशानं श्री वाञ्छ्येशं श्रियः पतिः ।
*त्रिमङ्गके श्रियः पाणिमग्रहीच्छङ्करेरितः ॥ २२
तत्रैव सन्निधौ शंभोः श्मशानं नित्यदीपितम् ।
तज्ज्वालाप्रभया शंभोर्नीराजनाविधिर्भवेत् ॥ २३
तत्र संवसतां पुंसां देहान्ते परमेश्वरः ।
सव्येतरे तच्छ्रवणे दद्यात्पञ्चाक्षरं मुने ॥ २४
तेन मुक्तो भवेदेव न स भूयोऽभि जायते ।
शिव एव शरण्यपुण्यमूर्तिः शिव एवाखिलदेवचक्रवर्ती ।
शिव एव विदूरितामरार्तिः शिव एवाखिलवेदगीतकीर्तिः॥

इति श्री शिवरहस्ये सप्तमांशे उत्तरार्द्धे अष्टाविंशोऽध्यायः ॥



## ॥ अथ षट्चत्वारिंशोध्यायः ॥

श्री स्कन्दः-

गतः काशीं पुरा विष्णुर्नत्वा विश्वेश्वरं मुने ।
अपृच्छद्वासधर्मांश्च काश्या मेव महेश्वरम् ॥ १
महेश्वरोदितान्धर्मान् श्रुत्वाऽत्यन्तभिया हरिः ।
सुखोपायमपृच्छत्तं क्षेत्रमन्य द्विमुक्तिदम् ॥ २

* திருக்கண்ணமங்கை

महादेव जगन्नाथ देवदेव सनातन ।
काशीवासस्सुराणां तु दुर्घटः किं पुनर्नृणाम् ।। ३
काश्यां पुण्यं शिवाघं च वर्धते वटबीजवत् ।
तद्भोगाय न शक्तास्स्मो भैरवः पापिशासकः ।। ४
तत् ब्रह्मघटिकामात्रत्रितयं पापि शासनम् ।
तदन्ते मुक्तिरित्युक्ता त्वया तत्रैव लीलया ।। ५
कल्पसाराः कथं सोढाः अस्यान्ते ते सुराः नराः ।
तदा विष्णुवचः श्रुत्वा महादेवोऽप्युवाच तम् ।। ६
महादेवः-
शृणु विष्णो रहस्यं त्वं गोप्यतां सर्वदा हृदि ।
पुण्यपापाभिवृद्धिश्च सर्वक्षेत्रेषु सा समा ।। ७
श्रिया वियुक्तस्त्वं पूर्वं तप्तवान् परमं तपः ।
कावेर्या दक्षिणे भागे पूर्वांभोधेस्तु पश्चिमे ।। ८
श्रीवाञ्छ्यं नाम तत्रास्ते क्षेत्रं प्रियतमं मम ।
तत्र संवसतां नॄणां पापं नैव विवर्धते ।। ९
वर्धते पुण्यमेवैकं तत्क्षेत्रस्य प्रभावतः ।
न भोगफलदं विष्णो भवत्येवाघसञ्चयम् ।। १०
विन्यस्तदण्डस्तत्रास्ते भैरवः पापिशासकः ।
तत्रान्तकाले हि नृणां मुक्तिं दास्याम्यहं सुखम् ।। ११
पञ्चाक्षरं परं मन्त्रं तेषामुपदिशाम्यहम् ।
अविमुक्तादपि श्रेष्ठं सुखदं त्विदमेव हि ।। १२
नास्त्यन्यन्मुक्तिसुलभं गोप्यतां हृदि माधव ।।

स्कन्दः-

इत्युक्तोऽथ महेशेन नत्वाऽगात्स्थानमच्युतः ।। १३

तत्र शंभुः समाराध्य युक्तोऽभूत्परया मुदा ।

इदं रहस्यं परमं जैगीषव्य पुरा श्रुतम् ।। १४

सदाशिवोक्तमिति सा गौरी मामाह सादरम् ।। १५

इति श्री स्कान्दे शिवरहस्ये सप्तमांशे उत्तरार्द्धे

एकोनत्रिंशोऽध्यायः ।।



## ।। अथ सप्तचत्वारिंशोऽध्यायः ।।

(श्री स्कान्दे सह्याद्रिखण्डतः)

श्रीसूतः-

एवं संप्रार्थितो देवैर्भगनेत्र निपातनः ।

विन्ध्यगर्वापहाराय शिवोऽगस्त्यं पुरः स्थितम् ।। १

प्राह प्रसन्नमनसा सुराणामुप शृण्वताम् ।।

ईश्वरः-

गच्छागस्त्य मयाऽऽज्ञप्तो विन्ध्यगर्वापनुत्तये ।। २

सुराणं कार्यसिद्ध्यर्थं मार्गार्थं शशिसूर्ययोः ।

मत्समस्त्वं मुनींद्रेषु गच्छ विप्र मदाज्ञया ।। ३

तदाकर्ण्य वचश्शंभोर्विषण्णः कुंभसंभवः ।

प्राह प्रांजलिरीशानं दुःखितोऽतीव दीनवत् ।। ४

अगस्त्यः-

किं मयापकृतं शंभो प्राप्यानन्दवनं तव ।

नापराद्धं मया किञ्चित्काश्यामस्यां यथाविधि ।। ५

वर्णा श्रमाचारवतामुचितं संस्थितं मया ।
नचैवान्तर्गृहविधौ न कृतं मलमोचनम् ।। ६
न द्रोहो न च मात्सर्यं पैशुन्यं भर्त्सनं विभो ।
अत्युग्रं जन्तुमात्रस्य न कृतं परमेश्वर ।
पञ्चाक्षरजपासक्तः पञ्चास्यध्यानतत्परः ।। ७
पञ्चक्रोशरतः पक्षे पञ्चलिङ्गार्चने रतः ।
अविमुक्तेश विश्वेश ज्ञानेशान त्रिलोचन ।। ८
विश्वेशमन्नपूर्णां च सदा संपूजयाम्यहम् ।
शिवनाम जपत्येव जिह्वा शंभो सदा मम ।। ९
स्मराम्याप्तुं त्वत्पदाब्जमुक्तिमेकेन जन्मना ।
एतादृशी मया काशी कथं त्याज्या महेश्वर ।। १०
अनन्तजन्मनामन्ते तपसा त्वत् प्रसादतः ।
प्राप्ता मया महादेव त्वियं वाराणसी विभो ।। ११
आपत्स्वपि च देवेश नाहं काशीवियोगजम् ।
दुःखं प्राप्तुमिहेच्छामि प्रसादात्तव शङ्कर ।। १२
उपसर्गकरा देवा मम प्राप्ताः किमद्य वै ।
यथा ज्ञानप्रमोक्षार्थं नृणां कुर्वंति मोहनम् ।। १३
अविमुक्ते मुक्ति विधौ विघ्नं कुर्वंति ते सुराः ।
नाहं त्यक्ष्ये महादेव काशीं ब्रह्मप्रकाशिकाम् ।। १४
सन्तप्तोऽत्यन्तदुःखेन ननाम परमेश्वरम् ।
तदा तद्वचसा शंभुर्भाविनोऽर्थस्य गौरवात् ।। १५
सुराणां कार्यसिद्ध्यर्थं घटोद्भवमुवाच वै ।।

ईश्वरः-

मां भैषीस्त्वं मुनिश्रेष्ठ क्षेत्रं काश्याऽधिकं भुवि ।। १६

भारतेऽत्रापि वर्षे वै सह्यजापुण्यरोधसि ।

क्षेत्राणि च बहून्येव सन्ति मुक्तिकराणि च ।। १७

तेषु क्षेत्रेषु पुण्येषु श्रीवाञ्छ्यं मुक्तिदायकम् ।

श्रियं वाञ्छन्पुरा विष्णुस्तताप परमं तपः ।। १८

श्रियं प्राप मुने तत्र तस्माच्छ्रीवाञ्छ्यसंज्ञितम् ।

काश्यामस्यां भैरवोऽत्र पापिनां शासकस्सदा ।। १९

तत्र श्रीवाञ्छ्यके क्षेत्रे निर्व्यापारो हि भैरवः ।

पापानि नाशमायान्ति पुण्यं तत्र विवर्धते ।। २०

अन्यत्र क्षेत्रवर्येषु नैवमस्ति मुनीश्वर ।

सहामि तत्र सर्वेषां प्राणिनामपराधकम् ।। २१

तत्रैव वसतां विप्र मुक्तिरेकेन जन्मना ।

गच्छ मा शुच भद्रन्ते सुरकार्यं प्रसाधय ।। २२

इत्युक्तः कुंभजन्माऽथ नत्वाऽगाच्छङ्करं द्विजाः ।

विन्ध्यं निरुध्य श्रीवाञ्छ्ये उवासाभ्यर्च्य शङ्करम् ।। २३

सह्यजारोधसि स्वच्छं श्री वाञ्छ्यं मुनिसत्तमाः ।

तत्रैव वसतां पुंसां मुक्तिरे केन जन्मना ।। २४

तेऽन्यत्र नैव गच्छन्ति स्थानमाहात्म्यवेदिनः ।

एतद्वः कथितं विप्राः किमन्यच्छ्रोतु मिच्छथ ।। २५

पुण्यं यशस्यमायुष्यमेतद्विप्राः कथामृतम् ।। २६

इति श्री स्कान्दे महापुराणे सह्याद्रिखण्डे
श्री वाञ्छ्यक्षेत्र माहात्म्ये नवतितमोऽध्यायः ।।



## ।। अष्टचत्वारिंशोऽध्यायः ।।

(ब्रह्माण्डपुराणे - श्री वाञ्छ्यक्षेत्रान्तर्गत श्रीभूवैकुण्ठ
वरदराजक्षेत्रमाहात्म्यम् ।)

ऋषयः-

तुरङ्गवदन श्रीमन् सर्वविद्या कलानिधे ।
त्वत्तः प्रशंसा तीर्थानां श्रुता ह्यस्माभिरादरात् ।। १

पुरा तीर्थप्रसङ्गेन श्री वाञ्छ्ये भुक्तिमुक्तिदे ।
वर्तते वीरहत्तिघ्नं रामतीर्थमिति त्वया ।। २

प्रोक्तं तद्रामतीर्थस्य वैभवं कथयाद्य नः ।
भवन्मुखांबुजोत्पन्नं कथामृतरसायनम् ।। ३

पायं पायं न तृप्ताः स्मश्शुश्रूषा जायते पुनः ।
तस्मादस्माकमधुना वद विस्तरतो मुने ।। ४

हयग्रीवः-

साधु साधु महाप्राज्ञाः सत्प्रसङ्गः समीरितः ।
भवद्भि र्भवतां वक्ष्ये शृणुध्वं सावधानतः ।। ५

यस्य श्रवणमात्रेण मुच्यन्ते भुवि मानवाः ।
कावेर्या दक्षिणे तीरे योजनद्वयमात्रके ।। ६

श्री वाञ्छ्यमितिविख्यातं क्षेत्रं काश्याश्शताधिकम् ।
तदन्तर्वर्तते क्षेत्रं भूवैकुण्ठाभिधं महत् ।। ७

श्वेतद्वीपाच्च वैकुण्ठात् प्रीतिदं कमलापतेः ।
तस्मिन्वरदराजाख्यो विष्णुर्लक्ष्म्या विराजते ।। ८

तद्विष्णोर्दक्षिणे दूरे पश्चिमे चोत्तरेऽपि च ।
तीर्थानि शेषलक्ष्मी श्रीरामाभिख्यानि रेजिरे ।। ९

त्रीणि तेषु द्वयोश्शेषलक्ष्मी नाम्नोस्तु तीर्थयोः ।
आदौ माहात्म्यमधुना प्रोक्त्वा पश्चात् ब्रवीम्यहम् ।। १०
रामतीर्थस्य माहात्म्यमशेषाघौघनाशनम् ।
इतिहासेन सहितं संसृतेर्मुक्तिकारणम् ।। ११
माहिष्मत्या पुरा पुर्यां कृतवीरसुतो बली ।
कार्तवीर्यार्जुनो नाम्ना राजा सोमकुलो द्भवः ।। १२
स पितामहमुद्दिश्य तपस्तेपे सुदारुणम् ।
तस्य तत्तपसा तुष्टो वर्षाणामयुते गते ।। १३
कार्तवीर्यार्जुनं प्राह ब्रह्मा लोकपितामहः ।
कृतवीरसुत श्रीमंस्त्वया किं तप्यते तपः ।। १४
तुष्टस्त्वत्तपसा हन्त दास्ये मत्तो वरान्वृणु ।
एवमुक्तः स पप्रच्छ स्वस्याभीष्टानि सादरम् ।। १५
कराणां तु सहस्रं मे देयं प्रथमतस्त्वया ।
ऐश्वर्यं चापरिक्षीणमप्रमेयबलं पुनः ।। १६
विजयं सर्वशत्रूणामिति श्रुत्वा तु तद्वचः ।
तथैव दत्वा तत्सर्वं तत्रैवान्तरधात्किल ।। १७
अन्तर्धानं गते तस्मिन्नब्जयोनौ महामतिः ।
आप्ताभीष्टोऽर्जुनः पश्चात् प्रमुमोद चिरन्तराम् ।। १८
पश्चाद्दिग्विजयं चापि कृत्वा कालान्तरेऽर्जुनः ।
गर्वेण महताविष्टो माहिष्मत्यां व्यराजत ।। १९
पश्चात्कालान्तरे नर्मदायां स्त्रीभिस्समावृतः ।
जलक्रीडां प्रकुर्वाणस्तस्यामास्ते मदोद्धतः ।। २०
तत्काले रावणो नाम राक्षसः परवीरहा ।
विजिगीषुर्दिशां नाथान् पुरान्निर्गत्य नर्मदाम् ।। २१

समागत्य ससेनस्तु तस्यां स्नात्वाऽम्बिका पतिम् ।
संपूजयितुमारेभे नर्मदापुलिने शुभे ।। २२
तदानीं कृतवीरस्य तनुजः क्रीडयन् स्त्रियः ।
स्वयं करसहस्रेण स्रोतांसि रुरुधे मुदा ।। २३
तत्स्रोतोभिर्दशग्रीवो ममज्ज सह सेनया ।
ततस्तीरं समारुह्य क्रुद्धो युद्धाय निर्गतः ।। २४
ततोऽर्जुन दशग्रीवौ युयुधाते परस्परम् ।
ततः प्रववृधे युद्धं तुमुलं रोमहर्षणम् ।। २५
अस्मिन्युद्धे दशग्रीवं जित्वा माहिष्मतीपतिः ।
बलाद्गृहीत्वा तद्बाहून् बध्वा पाशैर्दृढं मुदा ।। २६
न्यवेशयद्दशग्रीवं कारावेश्मनि दुर्जये ।
एतच्छ्रुत्वाऽर्जुनं प्राप्य ब्रह्मा वागभिसान्त्वनैः ।। २७
प्रसाद्य मोचयामास रावणं कृतवीरजात् ।
ततः कालान्तरे कार्तवीर्यार्जुनमहीपतिः ।। २८
मदाविष्टोऽब्धिना योद्धुं सबलो निर्गतः पुरात् ।
गत्वा तीरं समुद्रस्य शरैरग्निशिखोपमैः ।। २९
समुद्रं क्षोभयामास सान्तर्झषसमाकुलम् ।
ततस्त्वब्धिस्समागत्य प्राहार्जुनमरिन्दमम् ।। ३०
कृतवीरसुत श्रीमन् किमर्थं मां प्रबोधसे ।
इत्युक्तो द्वंद्वयुद्धं मे दातुमर्हसि वारिधे ।। ३१
स एवमुक्तो वारीशः प्रत्युवाच भयातुरः ।
नाहमर्हामि भवता योद्धुं त्वत्कृपयाऽधुना ।। ३२
वसामि त्वं मयि कृपां कर्तुमर्हसि भोऽर्जुन ।
तर्हि मे युद्धदातारं ब्रूहि भूम्यान्तु वारिधे ।। ३३

एवमुक्तो नदीनाथश्चिन्तयामास चेतसा ।
योऽस्य प्राणान् हरत्याशु स वक्तव्यो मयाऽधुना ।। ३४
इति सञ्चिन्त्य हन्तारं निश्चित्याहाब्धिरर्जुनम् ।
जमदग्निरिति ख्यातो ब्रह्मर्षिर्ब्रह्मवित्तमः ।। ३५
तस्य पुत्रोऽतिबलवान्पितृभक्तिसमन्वितः ।
नाम्ना परशुरामेति वर्तते सोऽतिदर्पवान् ।। ३६
कदा द्रक्ष्यामि मे युद्धदातारं यं च कश्चन ।
विधिना हेतुना केन युद्धदो मे न सृज्यते ।। ३७
द्रक्ष्यामि किं मे दातारं युद्धं भूम्यामिति ब्रुवन् ।
प्रतीक्षमाणो बलिनं वर्तते जमदग्निजः ।। ३८
युयुत्सोस्ते युद्धदाता स एवान्यो न कश्चन ।
त्वया विना तं जेतारं पश्यामि नहि भूतले ।। ३९
युयुत्सा तव यद्यस्ति तेन युद्धं समाचर ।
एवमुक्तोऽब्धिना शीघ्रान्निर्गत्य विजयाय सः ।। ४०
चतुरङ्ग बलोपेतो जमदग्न्याश्रमं ययौ ।
तदा पराशुरामोऽपि ज्ञात्वा युद्धार्थमागतम् ।। ४१
गृहीत्वा परशुं वेगान्निरगादाश्रमाद्बहिः ।
ततस्तयोरभूद्युद्धं तुमुलं रोमहर्षणम् ।। ४२
अस्त्र शस्त्रैरजेयौ तौ परस्पर जयैषिणौ ।
युयुधाते महावीर्यौ जामदग्न्यार्जुनौ तदा ।। ४३
ततः कोपसमाविष्टो जामदग्न्यः प्रतापवान् ।
मया किमर्थमल्पेन चिरं खेदोऽनुभूयते ।। ४४

इति स्वान्ते समालोच्य जामदग्न्यः प्रतापवान् ।
चिच्छेद कार्तवीर्यस्य शिरः परशुना मुदा ॥ ४५

दृष्ट्वा तत्कार्तवीर्यस्य निधनं रणमूर्धनि ।
तदीया निर्गता सेना तं हन्तुं चतुरङ्गिणी ॥ ४६

आवव्रे च तदा सेना रामं प्राकारवत् क्रुधा ।
ततोऽर्जुनस्य सेनाया रामस्य च परस्परम् ॥ ४७

संप्रहारो महानासीत्परस्परजयैषिणोः ।
सेनाबाणैस्तु संभिन्नो रामो रामेषुभिश्च सा ॥ ४८

ततो रामस्सुसंक्रुद्धस्सेनां तां चतुरङ्गिणीम् ।
एकेनैवेषुणा रुद्रस्त्रिपुराणि यथा तथा ॥ ४९

ददाह सेनां तां रामस्तदा परशुनैव सः ।
पुनर्भुविस्थान् राजन्यान् संक्रुद्धस्स पुनः पुनः ॥ ५०

कुलैकविंशं संहृत्य विरम्याख्याखिलां धराम् ।
आत्मानमित्यमन्यंस्त न मेऽस्ति सदृशो बले ॥ ५१

एवं दर्पसमायुक्तं रामं परबलार्दनम् ।
जग्राह वीरहत्या तमंशुमन्तमिवाहिराट् ॥ ५२

स पीडितस्तया हत्या किं करोमीति चिन्तयत् ।
एवं चिन्तयतस्तस्य कूटस्थो विष्णुरव्ययः ॥ ५३

स्वांशभूताय रामाय लोकानुग्रहणाय च ।
वीरहत्तिनिवृत्त्यर्थं शीघ्रसिद्धिप्रदं भुवि ॥ ५४
विचिन्त्य तीर्थं रामस्य प्रादुरासीज्जनार्दनः ॥ ५५

इति श्री ब्रह्माण्डपुराणे श्री वाञ्छ्यस्थित भूवैकुण्ठवरदराजक्षेत्र माहात्म्ये एकोन नवति तमोध्यायः ॥



## ।। एकोन पञ्चाशोऽध्यायः ।।

हयग्रीवः -

प्रत्यक्षीभूय रामाय स्वांशभूताय भो द्विजाः ।
वीरहत्तिविनाशार्थं तीर्थं दामोदरोऽब्रवीत् ।। १

विष्णुः - राम तेऽहं प्रवक्ष्यामि रहस्यमतिपावनम् ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यन्ते भुवि मानवाः ।। २

शृणु राम महाबाहो सावधानेन चेतसा ।
पुरा कल्पान्तरे राम श्रीभूमिभ्यामहं मुदा ।। ३

वैकुण्ठे शेषपर्यङ्के प्रास्वपं कार्यहेतुना ।
मन्निद्रा समये देव्यौ किञ्चिद्वादं प्रचक्रतुः ।। ४

तदा सापद्न्यभावेन श्रीभूम्योः कलहोऽभवत् ।
तदानीमुत्थितोऽहन्ते दृष्ट्वा भूम्यां विमोहितः ।। ५

मास्तु वां कलहोऽत्रेति पक्षपात पुरस्सरम् ।
प्रालिङ्गन्वामहस्तेन लक्ष्मीमन्येन काश्यपीम् ।। ६

तेन क्रुद्धा तदा लक्ष्मीर्बहुधा मां विनिन्द्य च ।
स्वीयां शक्तिं समादाय प्रययावाश्रमं पितुः ।। ७

निश्शक्तिश्चाभवं लक्ष्मीविरहेण च पीडितः ।
पुनरानयने लक्ष्म्या मार्गोऽन्वेषि मया तदा ।। ८

याहि श्री चन्दनारण्यमच्युतेत्यशरीरवाक् ।
प्रवृत्तां तां समाकर्ण्य गत्वा श्रीचन्दनाटवीम् ।। ९

तत्रोपास्य महादेवं श्री वाञ्छ्येश्वरमव्ययम् ।
तदीय कृपया लक्ष्मीं पुनः प्राप्य मम प्रियाम् ।। १०

तत्र श्रीवाञ्छ्य नगरे श्रिया साकमहर्निशम् ।
नाम्ना वरदराजेति विश्रुतः पृथिवी तले ।। ११
वसामि चन्दनारण्ये श्री वाञ्छ्येशाज्ञया मुदा ।
श्वेतद्वीपाच्च वैकुण्ठादति प्रीतिकरं मम ।। १२
श्री वाञ्छ्यसंज्ञं तत्क्षेत्रं भूवैकुण्ठं मम प्रियम् ।
त्रिकालं वरदराजं मां तत्र ये भक्तिपूर्वकम् ।। १३
भजन्ते च भवांभोधिं ते तरन्ति न संशयः ।
तत्र मत्सन्निधौ भक्त्या दानानि कुरुते तु यः ।। १४
तस्याभीष्टं प्रयच्छामि मद्भक्तिं चाचलां श्रियम् ।
गोदानं भूमिदानं च कन्यादानं विशेषतः ।। १५
हिरण्यं वस्त्रदानं च गृहदानं विशेषतः ।
अन्नदानं वृषोत्सर्गं जलदानं विशेषतः ।। १६
ये कुर्वंति नरश्रेष्ठास्तत्र ते यान्ति मत्पदम् ।
तत्र तीर्थान्यनेकानि सन्ति तेष्वेकमादरात् ।। १७
तव हत्तिविमुक्त्यर्थं तीर्थं वक्ष्यामि ते शृणु ।
पुरा श्रीचक्रशेषास्ते मद्वियोगेन दुःखिताः ।। १८
मत्तपश्चरणे काले पश्चात्संचिन्त्य ते त्रयः ।।
इतः परन्नो न भवेद्वियोगः स्वामिनेति ते ।। १९
मत्प्रीत्यर्थं तपो घोरं तप्तुमारेभिरे तदा ।
तस्मिन् श्री वाञ्छ्य नगरे मदालय समीपतः ।। २०
मम प्रसादलाभाय प्राकरोद्दुष्करं तपः ।। २१
मम पश्चिमतस्तीर्थं कृत्वा लक्ष्मीस्सुदुश्चरम् ।
तपोऽचरन्मम प्रीतिजनयित्री जगन्मया ।। २२

ममोत्तरे महाभागो मच्चक्रोऽभीष्टसिद्धये ।
तीर्थं कृत्वा तपस्तीव्रमकरोदस्त्रनायकः ॥ २३
मत्प्रीत्यै कुर्वतां तेषां त्रयाणां तपसा तदा ।
सन्तुष्टोऽहमदां तेषामभीष्टन्तु पृथक्पृथक् ॥ २४
प्रथमं नागराजानमित्यवोचमहं मुदा ।
नागानामधिपाभीष्टं प्रार्थयस्व ददामि ते ॥ २५
इत्युक्तः प्रार्थयामास मां नागाधिपतिर्मुदा ।
भवद्वियोगो न भवेत्कदाचिदपि मे विभो ॥ २६
मद्भोगे च भवाञ्शेतां सर्वदा सर्वगोऽधुना ।
यत्तीर्थं तव पूजार्थं मयोत्पादितमिष्टद ॥ २७
तत् प्रसिद्धं भवेल्लोके नागतीर्थमिति प्रभो ।
यद्दिने भवतोऽभीष्टं मयाप्तं तद्दिने शुभे ॥ २८
वैशाखे शुक्लपक्षे तु मत्तारे तीर्थमज्जनम् ।
कृत्वा ये त्वां मदारूढमुत्सवे भवतो मुदा ॥ २९
सेवन्ते तेऽखिलान्कामानाप्य भुक्त्वा सुहृज्जनैः ।
पश्चाद्वैकुण्ठमासाद्य तत्रैव परिमुच्यताम् ॥ ३०
ये न विन्दन्ति सर्पाणां शापेन मनुजास्सुतान् ।
तेऽत्र स्नानाल्लभन्तां त्वत् प्रसादादात्मजान्बहून् ॥ ३१
अष्टानामहिनाथानामत्र तर्पणमात्रतः ।
पुत्राद्यैस्सद्गतिर्भूयादमायां रविसंक्रमे ॥ ३२
इत्यभिप्रार्थितो नागराज्ञा शेषेण सादरम् ।
तथैव दत्वा तत्सर्वं लक्ष्म्या निकटमन्वगाम् ॥ ३३
तदाप्रभृति तन्नागतीर्थमित्युच्यते जनैः ।
साऽपि लक्ष्मीः प्रसन्नं मां दृष्ट्वा नत्वा पुनः पुनः ॥ ३४

प्रदक्षिणं परिक्रम्य पुरतस्सांजलिः स्थिता ।
तामप्यवोचं किं लक्ष्मीस्तवाभीष्टं ददामि ते ॥ ३५

तथैवमुक्ता मां लक्ष्मीः प्रार्थयामास हृद्गतान् ।
इतो मे भवता विप्रयोगो न स्यात्कदाचन ॥ ३६

भूम्याश्च प्रीतिरधिका मयि ते भवतु प्रिय ।
यत्तीर्थं तव पूजार्थं मयोत्पादि मम प्रिय ॥ ३७

मत्तीर्थपूजया मह्यं प्रसन्नोऽभूत्परं भवान् ।
तल्लक्ष्मीतीर्थमित्येव जगति ख्यातिमृच्छतु ॥ ३८

लक्ष्मीतीर्थे मदीयेऽस्मिन् श्रावणे भृगुवासरे ।
याःस्त्रियः पतिवत्यस्तास्स्नात्वोपोष्यास्तगे रवौ ॥ ३९

निशामुखे विधानेन मां संपूज्य मुदा ततः ।
दीपावलीभिः कर्पूर नीराजनमुखादिभिः ॥ ४०

स्तोत्रैस्स्तुवन्ति तासां त्वं दिश जन्मनि जन्मनि ।
सौमङ्गल्यं सत्पतिं सत्कुमारं सौम्याकारं पुण्यभूमौ जनिं च ।
धर्मेबुद्धिं सत्कुले जन्मऋद्धिं
भक्तिं चावां पादयोर्भुक्तिमुक्तिम् ॥ ४१

यद्दिने शंकरेणावां संयुक्तौ हर्षसंयुतौ ।
तद्दैशाख्यान्तिथौ वैखानसविध्युक्तमार्गतः ॥ ४२

रथोत्सवं ये कुर्वंति ध्वज़ारोहणपूर्वकम् ।
आवयोस्तेऽखिलान्भोगानिह भुक्त्वा मही तले ॥ ४३

पश्चात्तव प्रसादेन देहान्ते मुक्तिमाप्नुयुः ।
ये सेवन्ते रथारूढं भवन्तं च मया सह ॥ ४४

अनायासेन संसारसागरान्मुक्तिमाप्नुयुः ।
भूवैकुण्ठेऽस्मदीयेऽस्मिन् भुक्तिमुक्तिफलप्रदे ॥ ४५

क्षेत्रे वरदराजस्य तीर्थे मन्नाम्नि ये नराः ।
निमज्याप्सु निषेव्यैकरात्रमात्रमपि प्रिय ॥ ४६
वसंति ते श्रीवैकुण्ठे वसंत्वाचन्द्रतारकम् ।
अयने विषुवे चैव संक्रान्तावुपरागयोः ।
एकादश्याममावास्यां मन्वादिषु युगादिषु ॥ ४७
अन्येषु पुण्यवारेषु पुण्ययोगेषु च प्रभो ।
पुण्यर्क्षेषु तथा पुण्यतिथिष्वपि च ये नराः ॥ ४८
स्नात्वा दानं तु यत्किंचिद्दत्वा तत्क्षेत्रवासिनाम् ।
वसन्ति दिनमात्रं ते मुक्तास्स्युस्त्वत् प्रसादतः ॥ ४९
अत्र द्विजो वा राजा वा वैश्यो वा शूद्र एव वा ।
संकरो वा स्त्रियो वापि यो वा को वा मुदान्वितः ॥ ५०
आलयात्परितोऽस्माकं सन्निधौ च विशेषतः ।
श्रोत्रियेभ्यो दरिद्रेभ्यो बहुपुत्रेभ्य एव च ॥ ५१
ब्राह्मणेभ्यो महार्हेभ्यः क्षेत्रवासिभ्य एव च ।
मन्दिराणि मनोज्ञानि दत्वोपकरणानि च ॥ ५२
पर्याप्तं यावता क्षोण्यां कुटुंबस्य भवेन्मुदा ।
तावद्ददाति यो भूमिं सस्ययुक्तां सदक्षिणाम् ॥ ५३
सोऽचिरात्सार्वभौमत्वमस्मिन्नेव हि जन्मनि ।
अवाप्य सकलान् भोगाननुभूय स्वबन्धुभिः ॥ ५४
वैकुण्ठे वसतां पश्चाद्यावत्तिष्ठति मेदिनी ।
एकं च ब्राह्मणं रिक्तं दरिद्रं स्थापयेद्यदि ॥ ५५
अस्मिन्विमुक्तदारिद्यः सद्यः श्रियमवाप्नुयात् ।
अत्र ये कन्यकादानं गोदानं च विशेषतः ॥ ५६

तिलदानं स्वर्णदानं वित्तदानं तथैव च ।। ५७
अन्यानि यानि दानानि सन्त्यस्मिन्वसुधा तले ।
तद्दातॄणां फलं कोटिगुणितं स्यात्स्थलान्तरात् ।। ५८
अत्रामलकमात्रं यदन्नं भक्त्या प्रयच्छति ।
तन्महामेरुतुल्यं स्यात् प्रसादात्तव सर्वदा ।। ५९
इत्येवमुक्तो लक्ष्म्याऽहं तस्यै सर्वमनोरथान् ।
तथैव दत्वाऽहं तस्माच्चक्रस्यान्तिकमन्वगाम् ।। ६०

इति श्री ब्रह्माण्डपुराणे भूवैकुण्ठ वरदराज
क्षेत्रमाहात्म्ये नवतितमोध्यायः ।।

## ।। अथ पञ्चाशोध्यायः ।।

महाविष्णुः -
अथ चक्रं च मां दृष्ट्वा राम नत्वा पुनः पुनः ।
स्तुत्वा च विविधैस्स्तोत्रैर्विनयेनाग्रतः स्थितः ।। १
चक्रा युध प्रसन्नोऽहं त्वदीयतपसाऽधुना ।
तवाभीष्टं प्रयच्छामि पृच्छ मां भक्तरक्षकम् ।। २
एवमुक्तं ततश्चक्रं मामप्राक्षीद्वरान्बहून् ।
कदाऽपि मे विप्रयोगो भवता न भवेत्पुनः ।। ३
अभङ्गा मे गतिर्भूयात्कुत्रापीश्वरजाद्विना ।
महायुद्धे महावीरा बहवो निधनं गनाः ।। ४
वीराणं वधजो दोषो यो मेऽभूद्गरुडध्वज ।
तद्दोषशमनार्थाय तीर्थमत्र विधत्स्व मे ।। ५
इत्युक्तस्तेन चक्रेण ध्यात्वा श्रीवाञ्छ्यनायकम् ।
पश्चात्तत्पाप शुद्ध्यर्थं तीर्थेष्वेकं च शक्तिमत् ।। ६

विचार्य वीरहत्तिघ्नं तीर्थमावाह्य मन्त्रतः ।
तेनैवोत्पादिते तीर्थे तदाऽस्नापयमादरात् ॥ ७
ततस्तद्वीरहत्तिभ्यो मुक्तं चक्रं व्यजायत
ततः पुनर्मां मच्चक्रं वरमन्यमयाचत ॥ ८
अद्य प्रभृति ये वीरहन्तारस्तेऽत्र मज्जनात् ।
मुक्ताःस्युर्वीरहत्तिभ्यो यावत्तिष्ठति मेदिनी ॥ ९
मन्निमित्तं इदं तीर्थमुदपादि त्वया यतः ।
तन्मन्नाम्ना चक्रतीर्थमित्येव प्रथितं भवेत् ॥ १०
इति संप्रार्थितस्तेन तस्मै सर्वमदां पुरा ।
तस्मात्तु तत्र श्रीवाञ्छ्यनगरे भुक्तिमुक्तिदे ॥ ११
मदालयाविदूरे मद्धामभागे सुपावने ।
चक्रतीर्थे कुरु स्नानं वीरहत्तिविमुक्तये ॥ १२
इत्युक्त्वाऽन्तर्हितो विष्णुस्स्वपदं प्रति भूसुराः ।
ततस्तद्विष्णु वचनं श्रुत्वा तु जमदग्निजः ॥ १३
श्रीवाञ्छ्यनगरं प्राप्य श्रीवाञ्छ्येशं प्रणम्य च ।
संपूज्य परया भक्त्या महाविभवविस्तरम् ॥ १४
श्रीवाञ्छ्यनगरीनाथं नायिकामपि तां तथा ।
पश्चाद्वरदराजं चाप्यानम्यात्मविशुद्धये ॥ १५
क्षेत्रोपवासं विधिवत्कृत्वा वपनपूर्वकम् ।
परेद्युः श्रावणे मासि श्रवणद्वादशीतिथौ ॥ १६
प्रातस्स्नात्वा चक्रतीर्थे स्नात्वा संकल्प पूर्वकम् ।
मुक्तोऽभूद्वीरहत्तिभ्यस्सौख्यं च परमाप्तवान् ॥ १७
पुनर्हृदि विचिन्त्यैकं श्री भूमिसहितं विभुम् ।
श्रीमद्वरदराजं तं चोद्दिश्य तप आतनोत् ॥ १८

पक्षमात्रेण तपसा रामस्यामिततेजसः ।
तुष्टो वरदाजस्तं प्राह किं तप्यते पुनः ॥ १९
इत्युक्तो विष्णुना रामः विष्णुं प्राञ्जलिरब्रवीत् ।
श्रीमन्वरदराजाख्यां यथार्थां तव भो कुरु ॥ २०
वरदानाच्च मर्त्यानामधिराजो यतस्ततः ।
भवान्वरदराजेति गीयसे विबुधैर्भुवि ॥ २१
तस्माद्वरदराजं त्वां वव्रेऽहं वरमच्युत ।
यत्तीर्थमज्जनाद्वीरहत्तिभ्यो मुक्तिमाप्नुयात् ॥ २२
तत्तीर्थं वीरहत्तिघ्नं मन्नाम्ना प्रथितं भवेत् ।
इतः परं रामतीर्थमिति लोके सुरेश्वर ॥ २३
यद्दिने भवतोऽभीष्टं मयाप्तं तद्दिने शुभे ।
द्वादश्यां श्रवणर्क्षेण युक्तायां सिंहगे रवौ ॥ २४
मदाख्ये रामतीर्थेऽह्नि ये स्नान्ति मनुजा भुवि ।
दानानि च महार्हेभ्यो ब्राह्मणेभ्योऽपि कुर्वते ॥ २५
तेषामभीष्टं दत्वैव वसात्रैव श्रिया सह ।
एवमुक्तस्स वरदराजो दत्वेष्टमादरात् ॥ २६
तत्रैवास्ते श्रिया भूवैकुण्ठेऽभीष्टप्रदे द्विजाः ।
एवं लब्ध्वा वरं विष्णोर्जामदग्न्यो महामतिः ॥ २७
पुनः कर्तव्यतां चित्ते चिन्तयामास हृष्टधीः ।
एतत्क्षेत्राधिपश्शंभुः श्रीवाञ्छ्येशो महेश्वरः ॥ २८
तत् प्रसादेन यल्लब्धं तदेव स्थिरतामियात् ।
इति सञ्चिन्त्य तपसा तमुपास्ते स्म भार्गवः ॥ २९
चिरादाविर्भवन्तं तं वाञ्छ्येशं वरदं विभुम् ।
नत्वा स्तुत्वा महादेवं प्रार्थयामास हृद्गतम् ॥ ३०

भगवंस्तावकक्षेत्रे वायुकोणे महेश्वर ।
यत्तीर्थं वीरहत्तिघ्नं वर्तते पापनाशनम् ॥ ३१
तन्मन्नाम्ना रामतीर्थमित्येव प्रथितं भवेत् ।
एवमुक्तस्तथेत्युक्त्वा श्री वाञ्छ्येशो दयानिधिः ।
तिरोऽधाच्च स्वकीये श्री वाञ्छ्यलिङ्गे मनोहरे ॥ ३२
ततः परशुरामोऽपि प्राप्य सर्वमनोरथान् ।
स्वस्थानमगमत् प्रीत्या ब्राह्मणानामधीश्वराः ॥ ३३
तदाप्रभृति तद्रामतीर्थमित्युच्यते जनैः ।
रामतीर्थप्रसङ्गेन युष्माकमहमादरात् ॥ ३४
उक्तवान्नागतीर्थस्य लक्ष्मीतीर्थस्य चोद्भवम् ।
माहात्म्यं च पुनश्चान्यद्वर्तते तीर्थमुत्तमम् ॥ ३५
देवैरुत्पादितं देवतीर्थमित्यति विश्रुतम् ।
तत्र तस्यापि माहात्म्यं संक्षिप्य प्रवदामि वः ॥ ३६
ये श्रुत्वा मुक्तिमेष्यन्ति संसृतेर्मनुजा भुवि ।
हयग्रीवः-
पञ्चमेढ्राभिधः कश्चिदसुरोऽभूत्पुरा द्विजाः ॥ ३७
शिरोभिः पञ्चभिर्युक्तः पञ्चपादसमन्वितः ।
करैर्द्वादशभिर्युक्तो ववृधे दर्पपूरितः ॥ ३७
स देवैर्युयुधे सार्धं वर्षाणां शतमद्भुतम् ।
पलायितश्च बहुधाऽमृतश्च शतशोऽसुरः ॥ ३९
कदाचित् स्वगुरुं शुक्रं प्रब्रवीत्पञ्चमेढ्नः ।
शतशश्शत्रवो युद्धे मया ग्रस्ता ममोदरम् ॥ ४०
भित्त्वैव निर्गतास्तेन मृतप्रायश्च नैकदा ।
तदा तदा तु भवता जीवितोऽहं पुराऽधुना ॥ ४१

यमेन सुमहद्युद्धं ममासीददतिदारुणम् ।
मया यमोऽपि गलितस्स तु पश्चान्ममोदरम् ॥ ४२
भित्वा निर्गत्य सहसा साट्टहासं जहास च ।
पुनर्मृतोऽहं भवता जीवितः पुनरप्यहम् ॥ ४३
इतो मज्जठरात्तानां मरणाय तपस्तपे ।
शीघ्रसिद्धिप्रदं क्षेत्रं वदेदानीं गुरो मम ॥ ४४
एवमुक्तः कविः प्राह पञ्चमेहं तमादरात् ।
स्यमन्तपञ्चकं तीर्थं तत्र तप्तुं त्वमर्हसि ॥ ४५
त्रियंबकं समुद्दिश्य यजस्व तपसा मुदा ।
एवमुक्तस्तथाकार्षीत् तत्प्रीत्यै पञ्चमेहनः ॥ ४६
अप्रसन्ने शिवे छित्वा शीर्षाणि करजैर्मुदा ।
चत्वारि प्राजुहावाग्नौ त्रंबकाय न मे ति सः ॥ ४७
पञ्चमं च शिरश्छेत्तुं यतमाने हि राक्षसे ।
वह्निमध्यात्समुत्तस्थौ भगवानंबिकापतिः ॥ ४८
शुद्धस्फटिकसंकाशो बालेन्दुकृतशेखरः ।
उवाच तं पञ्चमेढ्रं साहसं मा कृथा इति ॥ ४९
विद्धि त्वदीयतपसा सन्तुष्टं मां सुरेश्वरम् ।
किं तेऽभीष्टं प्रदास्यामि मा चिरं वद सांप्रतम् ॥ ५०
इत्युक्तः प्रार्थयामास त्र्यंबकन्त्रिदशेश्वरम् ।
बहूनां च वराणां त्वं दाता भव महेश्वर ॥ ५१
हुतशीर्षसमुत्पत्तिर्ग्रस्तजीवमृतिस्तथा ।
त्वज्जटोद्भूतभूतेन मृतिरस्तु न मेऽन्यथा ॥ ५२
इत्येवं प्रार्थितस्तेन दत्वान्तर्द्धिमगात्तदा ।
ततो बबाधे नितरां निर्जरान् पञ्चमेहनः ॥ ५३

तत इन्द्रादयो देवास्तद्बाधामसहिष्णवः ।
श्री वाञ्छ्य नगरीमेत्य स्थित्वा तत्र चिरं सुराः ॥ ५४
तीर्थं चोत्पाद्य पूजार्थं रामतीर्थाविदूरतः ।
प्राग्भागेऽखिलतीर्थानि समावाह्य द्विजोत्तमाः ॥ ५५
त्रिकालं तेन तीर्थेन श्रीवाञ्छ्येशं सहोमया ।
अभिषिच्य महापूजाः कृत्वा स्वाभीष्टमादृताः ॥ ५६
अर्थयन्तः स्थिताः कश्चित्कालं तत्र महीसुराः ।
ततः कतिपयाब्देषु गतेषु परमेश्वरः ॥ ५७
देवैः कृताभिः पूजाभिः सन्तोष्याविरभूच्छिवः ।
आविर्भूतममर्त्यास्ते दृष्ट्वा श्री वाञ्छ्यनायकम् ॥ ५८
नत्वा स्तुत्वा पुनर्नत्वा वाञ्छ्येशं वरमर्थयन् ।
भगवन् जगदीशान पार्वतीरमण प्रभो ॥ ५९
पाह्यस्मान्पञ्चमेढ्रेण बाध्यमानान् सुरोत्तम ।
युद्धे जित्वाऽमरानस्मान् खादति स्म महासुरः ॥ ६०
अचिरेणैव कालेन क्षयं यास्यन्ति देवताः ।
तस्मादस्मान् सुहन्तारं तं त्वं नाशय शङ्कर ॥ ६१
यत्तीर्थपूजयास्माकं प्रसन्नोऽभूद्भवान् विभो ।
तत्तीर्थमस्मन्नाम्ना तु प्रसिद्धं भवतु प्रभो ॥ ६२
देवतीर्थमिति ख्यातं यावत्तिष्ठति मेदिनी ।
अत्र श्री वाञ्छ्यनगरे देवतीर्थे विशेषतः ॥ ६३
यदा कदाचिद्ये केचिद्विधिहीनतयापि वा ।
स्नात्वा सकृदपि त्वां ये भजन्ते लिङ्गरूपिणम् ॥ ६४
तेऽमरत्वमनु प्राप्य वसन्तु रजताचले
यद्दिने भवताऽभीष्टो दत्तोऽस्मभ्यं पुरारिणा ॥ ६५

तस्मिंच्छ्रावणमूलर्क्षे स्नानान्मुक्तिप्रदो भव ।
एवमुक्तस्सुरैस्सर्वैस्तथेत्युक्त्वा त्रिलोचनः ॥ ६६
अन्तर्धिमगमत् स्वीये लिङ्गे श्रीवाञ्छ्य नायकः ।
देवता अपि तत्रैव स्थितास्तस्य वधावधि ॥ ६७
तत कालान्तरे वीरभद्रेण निधनं गते ।
पञ्चमेढ्रासुरे पश्चात् स्वं स्वं स्थानं ययुः सुराः ॥ ६८
उक्तं वो देवतीर्थस्य माहात्म्यमपि सुव्रताः ।
तद्देवतीर्थे स्नातानां नृणां श्री वाञ्छ्य नायकः ॥ ६९
संसारसागरान्मुक्तिं दास्यत्येव न संशयः ।
ये पठन्त्यमुमध्यायं शृण्वन्ति श्रद्धयापि वा ।
तेषां त्रिविष्टपे वासो नित्यं स्यान्नात्र संशयः ॥ ७०
उत्पत्तिं देवतीर्थस्य माहात्म्यं च प्रसङ्गतः ।
अभ्याधायि मयेदानीं मङ्गलानि भवन्तु वः ॥ ७१

इति ब्रह्माण्ड पुराणे भूवैकुण्ठवरदराज क्षेत्रमाहात्म्ये
त्रिणवतितमोऽध्यायः ॥

(भूवैकुण्ठवरदराजक्षेत्र पुराणं संपूर्णम्)

## ॥ एकपञ्चाशोऽध्यायः ॥

*दभ्रालिवन माहात्म्यम्

ऋषयः-

भगवन्मुनिशार्दूल कुंभयोने महामते ।
कृतकृत्या वयं सर्वे वसिष्ठादिमुनीश्वराः ॥ १

★ திருவண்டூர்

श्री वाञ्छ्येशस्य परितः कानि स्थानानि सन्तिहि ।
तीर्थानि दिव्यनामानि पञ्चक्रोशान्तरे मुने ।। २
सन्ति तानि समाचक्ष्व कृपया करुणानिधे ।
शिवक्षेत्रस्य माहात्म्यं श्रोतुकामा वयं प्रभो ।। ३

अगस्त्यः -

साधु साधु महाप्राज्ञाः शिवभक्तिपरायणाः ।
सदाशिवप्रशंसायां दुर्लभा बुद्धिरीदृशी ।। ४

श्रीसूतः -

इति सर्वान् प्रशस्याथ कुंभयोनिर्महामुनिः ।
श्री वाञ्छ्य क्षेत्र विस्तारं व्याहर्तुमुपचक्रमे ।। ५
वाछ्येशस्योत्तरे भागे तक्षसंधिरिति श्रुते ।
क्षेत्रेऽस्ति सोमनाथाख्यो नृणां सर्वफलप्रदः ।। ६
तस्य क्षेत्रस्य पुरतः प्रागृहाख्यो विराजते ।
तस्याग्रतोऽपि विप्रेन्द्राः सारारण्यमिति स्मृतम् ।
तस्मिन् क्षेत्रे जगन्नाथो वसत्यद्यापि शोभने ।। ७
तस्य चाग्नेयदिग्भागे कहोलाश्रम इत्यसौ ।
कहोलस्याश्रमे पुण्ये श्री वाञ्छयेशः प्रकाशते ।। ८
तत्पश्चिमे च दिग्भागे घटिकाद्वयमात्रके ।
पुष्पवापीति विज्ञेया नृणां सर्वार्थदायिनी ।। ९
तस्मिन् क्षेत्रेऽवसद्देवोऽगस्त्येश इति विश्रुतः ।
अगस्त्येन कृतं पूर्वं दर्शनान्मुक्तिदायकम् ।। १०
घटिकामात्रके तस्य पश्चिमे स्थानमुत्तमम् ।
श्री वाञ्छ्येशविमानस्य नैऋत्यां दिशि भासते ।। ११

दक्षिणे हरिनद्यास्तु अर्धप्रहरमात्रके ।
दभ्रालिवनमित्येतत् स्थानं सर्वोत्तमोत्तमम् ।। १२
नृणां पापप्रशमनं श्रीवाञ्छ्येशस्य तुष्टिदम् ।
दर्शनान्मुक्तिदं लोके न प्रकाश्यन्तु नास्तिके ।। १३
तस्मिन् क्षेत्रवरे पुण्ये तीर्थं भैरवसंज्ञिकम् ।
तस्मिन् तीर्थे सकृत् स्नात्वा शुद्धो भवति पापकृत् ।। १४
भैरवेण कृतं पूर्वं कलिदोषविनाशनम् ।
तत्तीर्थतीरे सुमहान् भैरवोऽपि कृताकृतिः ।। १५
तप्त्वा तपांसि चोग्राणि दिव्यवर्षसहस्रकम् ।
शिवं संपूज्य विधिवद्भक्त्या परमया मुदा ।। १६
वरान् लब्ध्वा बहून्देवः श्री वाञ्छ्येश प्रसादतः ।
वर्ततेऽद्यापि विप्रेन्द्र ध्यानासक्तस्तु भैरवः ।। १७
आसीनभैरवस्यास्य प्रसादेन समन्वितः ।
मृतमात्रेण कैलासं प्राप्नुयुर्मानवा भुवि ।। १८

ऋषयः-

कर्मणा केन देवोऽपि भैरवो विकृताकृतिः ।
किमर्थं तपसा देहसंशोषणपरोऽभवत् ।। १९
कुतो वा परमेशात्तु वरं लब्ध्वा स्थितो ह्यसौ ।
एतत्सर्वं हि विस्तार्य ब्रूहि सम्यग्विचार्य च ।। २०
तेषां प्रश्नं समाकर्ण्य मुनीनां कुंभजो मुनिः ।
सन्तुष्टहृदयो भूत्वा जगाद मुनिसन्निधौ ।। २१
साधु प्रश्नः कृतो नूनं भवद्भिर्मुनि पुङ्गवैः ।
दभ्रालिवनदेशस्य प्रभावं पुण्य वर्द्धनम् ।। २२

भुक्तिमुक्तिप्रदं श्रेष्ठं शिवप्रेमकरं शुभम् ।
श्रीवाञ्छ्यक्षेत्र सदृशं न भूतो न भविष्यति ॥ २३

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शृण्वतां सर्वपापघ्नं पुत्रपौत्रादि वर्धनम् ॥ २४

पुरा कैलासशिखरे नानाधातु विचित्रिते ।
नानावीथी समायुक्ते नानावृक्षसमाकुले ॥ २५

कामधेनु पयः क्लिन्ने वृषराजपदांकिते ।
गङ्गाप्रवाहरम्याभिः स्वर्णपर्वतकान्तिभिः ॥ २६

सरसीभिरनेकाभिः कल्हारकुमुदालिभिः ।
सोपानवद्भिःशोभिष्ठे तप्तस्वर्णमयैश्शुभैः ॥ २७

शृङ्गैरनेकैस्संयुक्ते सिद्ध गन्धर्वसेविते ।
अप्सरोभिः परिवृते त्रिगुणोत्पादितैरपि ॥ २८

सुशीतलैर्वायुभिश्च सुमेरुधरणीतले ।
चन्द्रशालान्तरे देव्या पार्वत्या च सदाशिवः ॥ २९

गौरीकल्याण नटनमूर्वश्या कृतमद्भुतम् ।
रंभाद्याभिर्मुदा देवैस्स्कन्दनन्दिमुखैरपि ॥ ३०

आसीनः काञ्चने पीठे नानारत्नविचित्रते ।
गणनाथः शिवाकारो भैरवः शङ्करं शिवम् ॥ ३१

भस्मोद्धूलित सर्वाङ्गं नागेन्द्र कृतकुण्डलम् ।
त्रिपुण्ड्राङ्कित सत्फालं पार्वतीवल्लभं प्रभुम् ॥ ३२

कृताञ्जलिपुटो भूत्वा दण्डवत् प्रणनाम सः ।
सदाशिव नमस्तुभ्यं साक्षात् ज्ञानस्वरूपिणे ॥ ३३

भक्तवत्सल सर्वेश नमस्तुभ्यं दयानिधे ।
मदिष्टपूरक विभो त्वामहं शरणं गतः ॥ ३४

अधिकारस्त्वया दत्तस्सृष्ट्यादौ नाकिनां किल ।
इन्द्रादिलोकपालानां ममापि गिरिजापते ।। ३५
शिवक्षेत्रे मृतानां च जनानां यातनाप्रदः ।
दारूणामग्नितापेन निर्मलत्वं यथा भवेत् ।। ३६
तथा त्वमपि पापिष्ठान् शूलाग्रेण विशोधय ।
इत्याज्ञप्तस्त्वया शंभो शासनात्तव शङ्कर ।। ३७
तदाप्रभृति देवेश पीड्यन्ते प्राणिनो मया ।
अहिं सा परमो धर्मस्त्व हिंसा परमं तपः ।। ३८
अहिंसा परमं दानमहिंसा परमोदयः ।
अहिंसा परमो यज्ञस्त्वहिंसा तीर्थसेवनम् ।। ३९
अहिंसा परमो योगस्त्वहिंसा परमं सुखम् ।
अहिंसा शिवभक्तिश्चाप्यहिंसा शिवपूजनम् ।। ४०
अहिंसा पितृसन्तुष्टिरित्यूचुर्मुनयस्सुराः ।
तस्माद्धिंसात्मकं लोके कुत्सयन्ति मनीषिणः ।। ४१
तच्छान्ति मिच्छतो मेऽद्य निर्वृतिं शंस शङ्कर ।।
ईश्वरः-
साधु भैरव भद्रं ते भक्तोऽसि मम सुव्रत ।। ४२
आत्मार्थेनैव लोकानामुपकाराय पृच्छसि ।
संशृणुष्व गणश्रेष्ठ प्रोच्यमानं मयाऽधुना ।। ४३
सुमेरोर्दक्षिणे पार्श्वे जंबूद्वीपो विभासते ।
लक्षयोजनविस्तारो देवतिर्यग्जनैस्सदा ।। ४४
पूरितो द्वन्द्वशस्तत्र जंबूद्वीपे सुशोभने ।
गङ्गा प्रवाहवत्येषा काश्यां मोक्षप्रदायिनी ।। ४५

सरयूर्यमुना चैव नर्मदा च सरस्वती ।
कृष्णावेणी तुङ्गभद्रा गौतमी सह्यजा इमाः ।। ४६
इमास्सख्यश्च गङ्गाया नद्यो मोक्षप्रदास्सदा ।
तथापि सह्यजायास्तत् प्रभावं ते वदाम्यहम् ।। ४७
त्रिदिनं जाह्नवीतीरे वसतां शुद्धिरुच्यते ।
यमुनायास्तटे पञ्चदिनं निवसतां नृणाम् ।। ४८
शुद्धिर्विशिष्यते सद्यः पापमामरणावधि ।
क्षणमात्रं निवसतां कावेरीतीरवासिनाम् ।। ४९
नश्येद्धिचित्रं तीरेऽस्याः कावेर्या उभयोरपि ।
तीरयोः षट्सहस्रं तु स्थानं कलिमलापहम् ।। ५०
मदीयं स्थानमाभाति षट्सहस्रेषु तेष्वपि ।
स्थानेषु सह्यजातीरे मदीयेषु वरानने ।। ५१
काशीसमानमाभाति षट् स्थानं तेषु षट्स्वपि ।
स्थानेषु मत्पदेष्वेकं काश्याधिक्यं स्थलोत्तमम् ।। ५२
कावेर्या दक्षिणे तीरे योजनद्वयमात्रके ।
भूकैलासमिति प्रोक्तं स्थानं कलिमलापहम् ।। ५३
काश्याधिक्ये महीभागे नलिनीवनशोभिते ।
पुण्याब्जनलिनी भाति गङ्गापुष्करिणीति च ।। ५४
पुण्यपुष्करिणी चेति प्रसिद्धा भुवनत्रये ।
पुण्यपुष्करणीतीरे दक्षिणे भुवि शोभने ।। ५५
मदीयं लिङ्गमाभाति ज्योतिर्मयमनुत्तमम् ।
पश्चिमाभिमुखं लिङ्गं दर्शनान्मोक्षदं नृणाम् ।। ५६

तस्य लिङ्गस्य नैर्ऋत्यां दिशि स्थानं मम प्रियम् ।
दभ्रालिवनमित्येतद् अलिसंघैस्समावृतम् ।। ५७
नानावृक्षसमायुक्तं नानाद्विजसमायुतम् ।
तत्र गत्वा मम स्थाने तपः कुरु दृढव्रतः ।। ५८
तपसा नियमेनैव स्तोत्रेण मम मानव ।
शुद्धिमेष्यसि पापौघाच्छ्रीवांछ्ये मम पूजनात् ।। ५९
इति शंभोर्वचः श्रुत्वा भैरवो मुदिताननः ।
प्रणम्य दण्डबद्भूमौ सदा शिवमनन्यधीः ।। ६०
प्रस्थानाय मतिं चक्रे भूकैलासस्थलं प्रति ।। ६१

इति श्री बह्माण्डपुराणे श्री वाञ्छ्यमाहाम्ये द्वादशोऽयायः ।।

## ।। द्विपञ्चाशोऽध्यायः ।।

अगस्त्यः-

भूय एव महाभागाः दभ्रालिवन वैभवम् ।
शृण्वन्तु श्रद्दधानाश्च भैरवस्य प्रसादतः ।। १
स भैरवोऽपि कैलासाद्विनिष्क्रम्य गदान्वितः ।
गन्तुं श्रीवाञ्छ्यभूभागं कैलास शिखरात्तदा ।। २
उच्चचालाम्बरं सूर्यो यथोदयगिरेरपि ।
दक्षिणाभिमुखो भूत्वा परितो वीक्ष्य भूसुराः ।। ३
काशीनिभानि स्थानानि कैलाससदृशानि वै ।
बहूनि सन्ति स्थानानि तानि पश्यन् स भैरवः ।। ४
तत्र माहिष्मतीतीरे महाकालं शिवप्रियम् ।
काशीकैलाससदृशमपश्यद्रुद्रनन्दनः ।। ५

कालिन्दीतटिनी तीरे मधुरा मुक्तिदायिनी ।
काशीनिभा विभात्यस्यां मधुरायां शिवस्स्वयम् ।। ६
तत्र गोदावरी तीरे स्थानं सर्वोत्तमोत्तमम् ।
द्राक्षारामं शिवस्थानं काशीकैलाससन्निभम् ।। ७
तत्र श्री शैलशिखरं दृष्टमात्रेण मोक्षदम् ।
पश्य नन्दी फलान्यत्ति प्रत्यक्षं वापि दृश्यते ।। ८
सुवर्णमुखरीतीरे कालहस्तीति विश्रुतम् ।
कालहस्तीश्वरं लिङ्गं कलिकल्मष नाशनम् ।। ९
ज्ञानपुष्पांबया साकं तदीयं भाति यत्र वै ।
स्तंबेरम कराकारे दिव्य लिङ्गे वसन् हरः ।। १०
तत्रा पश्यत् सुशोभिष्ठं क्षीरनद्यास्तटे शुभे ।
काशीकैलाससदृशं काञ्चीनगरमुत्तमम् ।। ११
प्राणभूतस्थलं यत्तु चूतमूले जगत्पतेः ।
कामाक्षी करुणामूर्तिः कंपातीरेऽतिशोभने ।। १२
लोकरक्षार्थमावासं कुरुते भक्तवत्सला ।
एकाम्रलिङ्गं शोभिष्ठं कामाक्षीं च प्रणम्य च ।। १३
पुनर्विभाव्य तत्रस्थं विरिंचपुरमन्वगात् ।
काशीकैलाससदृशमपश्यद्भैरवस्तदा ।। १४
मार्गसाहाय्यकं लिङ्गमपश्यद्भैरवस्तदा ।
ततोऽरुणगिरिं प्राप्य स्वाभीष्ट फलसिद्धये ।। १५
गिरिं प्रदक्षिणं कृत्वा शङ्करं तोषयन् प्रभुः ।
ततो वृद्धाद्रि शिखरं मणिमुक्तानदीतटे ।। १६
अभ्यगच्छत्सुरश्रेष्ठा वृद्धाचल निवासिनम् ।
वृद्धांबिकासमायुक्तं प्रणम्य च पुनः पुनः ।। १७

पुण्य प्रधानभूतायाः कावेर्या उत्तरे तटे ।
चिदंबरे ज्ञानसभा भासते मोक्षदा नृणाम् ।। १८
चित्सभां ये तु पश्यन्ति ते मुक्ताः स्युर्न संशयः ।
सदाशिवस्य देवस्य सच्चिदानन्दताण्डवम् ।। १९
आविर्भवन्ति देवीं च चिदंबरसभांबिकाम् ।
दर्शयन्ति चिदानन्दं तेषां दर्शनतत्क्षणे ।। २०
भवेत् त्रिविधमानन्दं ते चिह्नं रोमहर्षणम् ।
शिवकामेश्वरीं चैव श्रीमूलेशं परात् परम् ।। २१
प्रणम्य भैरवस्तत्र स्तोत्रं कृत्वा मुहुर्मुहुः ।
शिवगङ्गाजले स्नात्वा शुद्धान्तःकरणो वशी ।। २२
श्वेतारण्यं समासाद्य कावेर्या दक्षिणे तटे ।
छायाऽरण्यं शिवस्थानं काशी कैलाससंनिभम् ।। २३
अपश्यत् भैरवो वेगात् पुण्यं घटपुरं महत् ।
काशीकैलाससदृशं भाति कैलासकाननम् ।। २४
वल्मीककानने देवं कमलालय नायकम् ।
काशी सदृशमाभाति वेदारण्यं पयोनिधेः ।। २५
वर्तते पश्चिमे भागे ताम्रपर्ण्यास्तटे स्थितम् ।
शालिवाटीश्वरं पश्यन् कैलासाभिध मुत्तमम् ।। २६
तस्यैशान्ये शिवस्थानं जीवन्मुक्तिपुरं त्विति ।
तत्राऽगत्य जवात् देवो भैरवो मुदिताननः ।। २७
स्नात्वा तु स्वर्णपद्मिन्यां मीनाक्षीसहितं प्रभुम् ।
नत्वा स्तुत्वा च निर्गत्य कावेरीमध्यगं पुरम् ।। २८
गजारण्यं च जप्येशं काशीकैलाससन्निभम् ।
दृष्टमात्रेण पापघ्नं सोऽपश्यत् भवनन्दनः ।। २९

कावेर्या  दक्षिणे तीरे कुंभघोण स्थलं महत् ।
कैलाससदृशं पूर्वं कुंभघोणस्य पावनम् ।। ३०
मध्यार्जुनमिति ख्यातं काशीसदृशमुत्तमम् ।
कावेर्या दक्षिणे तीरे श्रीमन्मङ्गलनायकम् ।। ३१
चूतारण्यं च वागीशं त्रिकोटिघटजस्थलम् ।। ३२
कैलास सदृशं पश्यन् गाननर्तनशङ्करम् ।
गौरीमायूरमाभाति कैलाससदृशं महत् ।। ३३
कार्वेया दक्षिणे तीरे योजनद्वयसंमिते ।
पुण्याख्य नलिनीतीरे श्री वाञ्छ्याख्यस्थलं महत् ।। ३४
काश्याधिक्यं ततः प्राप्य विश्वनाथस्य तुष्टिदम् ।
षट् षष्टि कोटिसंख्यानां तीर्थानामुत्तमोत्तमम् ।। ३५
तत् गत्वा भैरवो हृष्टः तीर्थे स्नात्वा प्रसन्नधीः ।
पश्चिमाभिमुखं लिङ्गं श्री वाञ्छ्येशस्य नायिकाम् ।। ३६
परिक्रम्य प्रणम्याथ पूजां कृत्वा विधानतः ।
लिङ्गस्य पश्चिमे भागे निर्ऋत्यां दिशि जग्मिवान् ।। ३७
दभ्रालिकाननं यत्र हेमभ्रमरसंकुलम् ।। ३८
तत्र गत्वा यथोद्दिष्टं शिवेन रजताचले ।
परितश्चारयन् दृष्टिं योजनद्वयमन्तरा ।। ३९
श्री वाञ्छ्येशविमानस्य षट्स्थानानि ददर्श सः ।
स्वशूलेनाखन्य तीर्थं रत्नसोपानसंयुतम् ।। ४०
तीर्थस्य पश्चिमे भागे तपसः स्थानमुत्तमम् ।
तस्मिन् देशे यथोक्तं तु लिङ्गं संस्थाप्य चादरात् ।। ४१

कालत्रयेऽपि तत् लिङ्गमर्चयित्वा विधानतः ।
ततस्सर्वान् समादाय नियमान् मुनिसेवितान् ॥ ४२

सदा पञ्चाग्निमध्यस्थः पादाङ्गुष्ठाग्रविष्ठितः ।
रात्रौ कुमुदवत् नेत्रे दिवा स्वस्य सरोजवत् ॥ ४३

हृत् कण्ठ तालुभ्रूमध्ये द्वादशान्तपदेष्वपि ।
विनिद्रितो विधायैव ध्यायमानो महेश्वरम् ॥ ४४

देवदेवं महादेवं त्रिपुरान्तकमीश्वरम् ।
नीलकण्ठं विरूपाक्षं उमादेहार्धधारिणम् ॥ ४५

मृत्युंजयं शिवं ध्यात्वा लिङ्गे संध्यात्रये यजन् ।
ऋग्भिश्च पावमानीभिः रुद्रसूक्तैरथर्वणैः ॥ ४६

शतरुद्रादिमंत्रैश्च प्रतिद्रव्यं सहस्रशः ।
जुहावाग्नौ तदा देवः शिवस्य परितुष्टये ॥ ४७

न दृशो गोचरः कस्य स्वर्ण भ्रमररूप धृक् ।
एवं वर्षसहस्रं तु तपस्तप्त्वा सुदारुणम् ॥ ४८

तपः प्रभावाद्देवस्य भैरवस्य महात्मनः ।
वह्निरुत्पद्यते तस्माद्देवरन्ध्रात् त्रिविष्टपम् ॥ ४९

व्याप्नोति स्म तदा देवान् शतक्रतुपुरोगमान् ।
तं दृष्ट्वा देवतास्सर्वा भीता विस्मितमानसाः ॥ ५०

जग्मतुश्शरणं सर्वे शङ्करं लोकशंकरम् ।
शंकिताश्च सुरास्तत्र नेमुस्सर्वे पृथक्पृथक् ॥ ५१

ऊचुश्च परमोद्विग्ना स्वस्थानाक्रमशंकया ।
देवाः-
भगवन् सर्वलोकेश भक्तानुग्रहतत्पर ॥ ५२

आपन्नार्तिहरेशान शरणं नो भव प्रभो ।
भूलोके पुण्यभूभागे जंबूद्वीपे सुपावनें ।। ५३
श्री वाञ्छ्याख्यं महत् स्थानं वर्तते कलिनाशनम् ।
तत् क्षेत्रस्याविदूरे तु पश्चिमे भैरवस्स्वयम् ।। ५४
दभ्रालिकानने देवः तपस्तप्त्वा सुदुश्चरम् ।
किमर्थं तपसा देहं शोषयामास मर्त्यवत् ।। ५५
तीव्राच्च तपसो घोरादग्निस्संजायते महान् ।
त्रीन्लोकान् प्रदहत्याशु वयं तस्मात् समागताः ।। ५६
त्वदंशभूतस्सर्वेश भैरवः किं करिष्यति ।
इति शङ्कितचित्ताश्च वयं त्वां शरणं गताः ।। ५७
तेषां तद्वचनं श्रुत्वा सुराणां मदनान्तकः ।
उवाच प्रहसन् सर्वान् देवान् देवपतिस्तदा । ५८
माऽस्तु भीतिरतो देवा युष्माकं स्थानविच्युतेः ।
न भवेत् भैरवाद्यूयं भयं सन्त्यज्य गच्छथ ।। ५९
इति शंभोर्वचः श्रुत्वा प्रणेमु स्त्रिदशाः शिवम् ।
सन्तुष्टहृदयाः सर्वे स्वं स्वं धाम समाययुः ।। ६०
गतेषु तेषु देवेषु भगवान् फाललोचनः ।
भैरवस्य वरं दातुं प्रतस्थेऽम्बिकया सह ।। ६१
रजताचलसंकाशं वृषमारुह्य शंकरः ।
जगाम काननं यत्र भैरवेण तपः कृतम् ।। ६२
सकलसुरसुरेन्द्रैरर्चितः पार्वतीशः
प्रमथविबुधबृन्दैस्सेव्यमानांघ्रिपद्मः ।

अमरवरनिदेशाददद्रि कन्यासहायः

भ्रमरवनसमीपं प्राप तूर्णं पिनाकी ॥ ६३

इति श्री ब्रह्माण्डपुराणे श्री वाञ्छ्य माहात्म्ये त्रयोदशोऽध्यायः ॥

## ॥ त्रिपञ्चाशोऽध्यायः ॥

ततस्सुरेश्वरो देवस्सान्निध्यमकरोत्तदा ।
भैरवस्याग्रतो देवस्तस्थौ हेमगिरिर्यथा ॥ १

ईश्वरः -

वरं वृणीष्व भद्रन्ते वरदोऽहमिहागतः ।
उन्मील्य सुरशार्दूल मां विलोकय भैरव ॥ २

यत् कांक्षसे त्वं मनसा तद्ददामि न संशयः ।
इति शंभोः वचः श्रुत्वा भैरवो हृष्टमानसः ॥ ३

उत्थाय संभ्रमाद्देवं चन्द्रार्धकृतभूषणम् ।
सनकाद्यैश्च योगीन्द्रैश्शक्राद्यैश्च मुनीश्वरैः ॥ ४

गंधर्वै रमरैस्सिद्धैः स्तूयमानं पृथक्पृथक् ।
नन्दिभृङ्ग्यादि गणपैस्सेवितं परमर्षिभिः ॥ ५

देवस्तुतिभिरग्र्याभिरीडितं ब्रह्मवादिभिः ।
स्तूयमानं पुरोभागे तिष्ठन्तं त्रिपुरान्तकम् ॥ ६

ननाम शिरसा भूमौ करणैस्त्रिविधैरपि ।
पुराणवाक्यैर्मधुरैः स्मृतिवाक्यैस्सुसंमतैः ॥ ७

वचोभिर्वैखरीभिश्च स्तोतुं समुपचक्रमे ॥ ८

स्वामिन् सर्व जगद्गुरो शिव महादेवेश देवोत्तम

प्राणाधार समस्तभूतहृदयप्रत्यग्विभासाकृते ।

प्रत्यण्डं विधिविष्णुरुद्रतनुभाक् त्वन्तु त्रिमूर्तिः परं
चिच्छक्त्या मिलितोऽसि सर्वविनुतं त्वां मानसे भावये ॥ ९

त्वं व्योमासि मरुत् त्वमेव दहनस्त्वं त्वं पयस्त्वम्मही
भानुस्त्वं शशभृत्त्वमेव तनुभृत्त्वं चन्द्रमौलीश्वर ।
सर्वज्ञस्त्वमुमापतिस्त्वममराराध्यस्त्वमात्मन् शिव
स्वामिन् सर्वजगत्पते पशुपते तुभ्यं नमस्सर्वदा ॥ १०

अन्तर्याम्यसि कार्तिकेयजनक श्रीदन्तितातो ह्यसि
श्रीकान्त प्रणतांघ्रिपद्म विविध श्रुत्यन्तसारोदित ।
भक्ताभ्यर्चितमोक्षदादिम परं ज्योतिस्त्वमेवेश्वर
श्री वाणीनुत पार्वतीप्रिय विभो तुभ्यं प्रणामोऽस्त्वयम् ॥ ११

सर्वप्राणिविहिंसनार्जितमहापापौघविच्छित्तये
त्वत्पादाम्बुज सेवनं सकृदपि त्वन्नामसंकीर्तनम् ।
प्रायश्चित्तमिति स्फुटं मुनिजनैरुक्तं त्वदाज्ञावशात्
आलोच्यैतदशेषवेदविनुतस्त्वं रुद्र गौरीश्वरः ॥ १२

श्री वाञ्छ्येश्वर तावके तु चरणद्वंद्वे मनस्त्वर्पयन्
त्वत्पादे पतितोऽस्मि शङ्कर दयासिंधो परित्राहि माम् ।
प्रत्यात्मानमनादिसिद्धमखिलप्राण्यन्तरङ्गस्थितं
सर्वज्ञं चिदचित्प्रपञ्चकरणं तुभ्यं नमस्सन्ततम् ॥ १३

इति स्तुत्वा महादेवं वाग्भिरासीनभैरवः ।
सुरेश्वर नमस्तुभ्यं नमस्तुभ्यं सुरेश्वर ॥ १४

पाहि मां करुणासिन्धो पतितं पादयोः ।
आसीनभैरव त्वं ते मया दत्तं गृहाण भो ॥ १५

त्रिवर्षं देवमानेन त्रिशूलाग्रेतु संस्थितिः ।
तदन्यत्र मृतानान्तु प्राणिनां भैरवाज्ञया ॥ १६

स्वस्थो भवाधुना शंभुमाध्यायन् हृदि भैरव ।
प्राणिहिंसाऽपराधस्ते नास्ति नास्ति मदाज्ञया ।। १७
परमप्रीतिरस्त्येव त्वयि मे भैरव शृणु ।
इत्युक्त्वाऽन्तर्दधे लिङ्गे तत्क्षणेन सुरेश्वरः ।। १८
तदाप्रभृति शर्वाज्ञां वहन् मूर्ध्नाऽथ भैरवः ।
आसीनभैरवो भूत्वाऽप्यहिंसन् प्राणिनः कचित् ।। १९
दारुणं तप उत्सृज्य शिवध्यानपरायणः ।
समदुःखसुखस्स्वस्थः सर्वप्राणिदयापरः ।। २०
शिवप्रेरितकर्माणि कुर्वन् शर्वसमोऽभवत् ।। २१
एतदद्भुतमाख्यानं ये शृण्वन्ति पठन्ति च ।
भैरवस्य प्रसादेन जीवन्मुक्ता भवन्ति ते ।। २२

इति श्री ब्रह्माण्ड पुराणे श्री वाञ्छ्य माहात्म्ये चतुर्दशोऽध्यायः ।।

(दभ्रालिवनमाहात्म्यं संपूर्णम्)

## ।। चतुःपञ्चाशोऽध्यायः ।।

(आग्नेयपुराणतः)

ऋषयः ऊचुः-

सूत पौराणिक श्रेष्ठ सर्वशास्त्र विशारद ।
त्वन्मुखांभोज निष्यन्दकथामधु पिबन् बहु ।
पृच्छामस्त्वां इदानीं च कथां पुण्यविवर्धिनीम् ।
पूर्वं कैलासशिखरं त्यक्त्वा देवो महेश्वरः ।। २
प्राग्गृहं प्राप्तवान्देव इत्युक्तं भवता पुरा ।
विस्तरात् तदिदानीं तु वद यद्यस्ति ते दया ।। ३

सूतः -

शृण्वन्तु ऋषयो वक्ष्ये व्यासाच्छ्रुतं महादरात् ।
पार्वतीश्वरसंवादं सर्वपापहरं शुभम् ।। ४
इतिहासेन सहितं पुरावृत्तं सहेतुकम् ।
पप्रच्छ पार्वती पूर्वं भगवन्तं महेश्वरम् ।। ५
स्वामिन् कैलासशिखरं त्यक्त्वा कुत्र गमिष्यसि ।
एतस्मात् सविशेषन्तु वद यद्यस्ति मे प्रभो ।। ६
कैलासादपि यन्मुख्यं सर्वालङ्कारशोभितम् ।
पक्षपातं विमुच्य त्वं वद राकेन्दुशेखर ।। ७
इति विज्ञापितो देव्या प्रसन्नः करुणानिधिः ।
प्रोवाच भगवान् शंभुः कृपया पार्वतीं प्रति ।। ८

ईश्वरः -

शृणु पार्वति वक्ष्यामि रहस्यमतिपावनम् ।
कैलासादपि यन्मुख्यं स्थानेभ्यश्चापि मुक्तिदम् ।। ९
यानि योगप्रसिद्धानि काश्यादीन्यपि भूतले ।
तेषामप्युत्तमं विद्धि प्राग्गृहं भुवनत्रये ।। १०
तस्य स्थानस्य माहात्म्यं शृणु तत्वेन भामिनि ।
श्रवणात् सर्वपापघ्नं सर्वमङ्गलकारकम् ।। ११
सर्वैश्वर्यप्रदं नृणां कीटानामपि मुक्तिदम् ।
इतिहासं प्रवक्ष्यामि साश्चर्यं महदद्भुतम् ।। १२
विंध्यदेशे स्थितो विप्रो नाम्ना पिप्पलकश्शठः ।
पूर्वजन्मकृतात् पापात् चण्डाल्या सहितोऽभवत् ।। १३
तया सह चिरं कालं राज्याद्राज्यं वनाद्वनम् ।
रेमे तत्र तया सार्द्धं तस्य लिङ्गस्य सन्निधौ ।। १४

परस्मिन् दिवसे तत्र वासार्थं च स्त्रियान्वितः ।
पर्णैश्च कुटिकां कृत्वा तत्र वासमकारयत् ।। १५
जीवनं मांसभक्षैश्च कुर्वन् हिंसापरायणः ।
मार्गरोधादिकान् कृत्वा स्थितस्तत्रैव स द्विजः ।। १६
तस्य पुत्रद्वयं जातमेका पुत्र्यप्यजायत ।
तां वर्धयित्वाऽसौ विप्रः पुत्रमत्यन्तमोहितः ।। १७
तां पुत्रीं यौवने काले भार्यार्थे समयोजयत् ।
स पुत्र्या सहितो भूत्वा मद्यपानरतस्तदा ।। १८
सदा क्रीडासु संसक्तः सदा हिंसापरायणः ।
पुत्र्यामुत्पादयामास पुत्राणां च त्रयं द्विजः ।। १९
तस्येत्थं वर्तमानस्य पापकर्मरतस्य च ।
दैवादायुःक्षयो जातः पञ्चत्वं च तदाऽगमत् ।। २०
तदा यमभटाः शीघ्रमागता दण्डपाणयः ।
पाशहस्ता महाघोरा भर्त्सयन्तः पृथक्पृथक् ।। २१
एनं छिन्धीति भिन्धीति दारयेति विदारय ।
जहि शोषय पिष्येति ह्यत्यगृह्णन् ततः परम् ।। २२
पाशैर्बध्वा दृढं घोरं यमदूता भयानकाः ।
यमलोकाय गच्छन्ति तमाबध्य द्विजाधमम् ।। २३
तदा मार्गस्य मध्ये तु शिवाज्ञापरिचारिणः ।
विमानवरमाहृत्य शिवदूताः समागताः ।। २४
दृष्ट्वा यमभटैर्बद्धं द्विजं चण्डालतां गतम् ।
मुञ्च मुञ्चेति चोचुस्ते भर्त्सयन्तश्च तान्द्रुतम् ।। २५
तेषां वचश्च ते श्रुत्वा यमदूता महाबलाः ।
अगणय्य च तान् सर्वान् गता यमपुरं प्रति ।। २६

शिवदूताः-

वदन्तो मुञ्च मुञ्चेति रुषा ज्वलितलोचनाः ।। २७

आरोप्य तं विमाने तु चण्डालीपतिमादरात् ।

दिशः प्रभासयन्तश्च ययुः कैलासमंबरात् ।। २८

ततो यमभटाश्शीघ्रं उद्यतायुधपाणयः ।

अयुध्यन् शिवदूतैश्च गदापरिघतोमरैः ।। २९

शिवदूता याम्यदूता केशाकेशि मिथो मिथः ।

प्रहारैस्सर्वगात्रेषु दारिता यमकिङ्कराः ।। ३०

अतिनिर्भिन्न मर्माणः चक्रुर्युद्धं महाभयम् ।

शिरस्सु कृत्ताः केचित्तु बाहावुरसि चापरे ।। ३१

अङ्गैर्विहीनाः केचित्तु याम्या भक्ताः पलायिताः ।

यमस्य निकटं प्राप्य हा हता इति मोहिताः ।। ३२

यमे विज्ञाप्य सकलं दर्शयित्वा वपूंषि च ।

रुरुदुश्शोकसन्तप्ता नाथवन्तोऽप्यरक्षिताः ।। ३३

शिवस्य किङ्करास्तेऽपि तं प्रगृह्य विमानके ।

शिवस्य सन्निधिं प्राप्य शिवे सर्वं व्यजिज्ञपन् ।। ३४

शिवोऽपि सर्ववृत्तान्तं दृष्ट्वा श्रुत्वा द्विजस्य च ।

गतिं पापमयीं पूर्वामवधूय विमोचनात् ।। ३५

चकार तं सगन्धं च द्विजं परमभास्वरम् ।

द्विजोऽपि गणवर्याणामाधिपत्यं शिवात् प्रभोः ।। ३६

लब्ध्वा तत्पादयोर्नत्वा यमदूतभया च्छिवम् ।

रक्ष रक्षेति वाक्यानि वदन् समधुराक्षरम् ।। ३७

तस्माद्विमानं लब्ध्वा च शिवेन सह मोदितः ।
विमानवरमारुह्य अप्सरोभिश्च संयुतः ॥ ३८
यथाकामं चचारासौ निर्व्याजगतिरात्मवान् ।
यमस्तु दूतवाक्यानि श्रुत्वा कोपसमन्वितः ॥ ३९
चित्रगुप्तमुवाचेदं वचनं स्फुरिताधरः ।
ब्रूहि द्विजस्य यत्पुण्यमस्ति चेत्परमार्थतः ॥ ४०
येनैवं शिवलोकस्य प्राप्तिरस्याभवद्दृढा ।
नो चेत् कृपा न भवति चण्डालीसहचारिणः ॥ ४१
विशोध्य जन्मप्रभृति समार्जितमघं परम् ।
इत्यस्य वचनं श्रुत्वा चित्रगुप्तः स बुद्धिमान् ॥ ४२
पटमादाय शीघ्रेण समालोक्य समूचिवान् ।
नास्य धर्मे मतिरपि प्रवृत्ता पापचारिणः ॥ ४३
चण्डालीसहितो भूत्वा तत्पुत्र्या च सहैव तु ।
तयोः पुत्रान् समुत्पाद्य मद्यमांसरतस्तथा ॥ ४४
यावज्जीवं जीवघाती महापापरतस्तथा
न जाने तस्य पुण्यं च यद्यस्ति सुकृतं प्रभो ॥ ४५
चित्रगुप्तेनैवमुक्तो महामहिषवाहनः ।
आस्फोट्य हस्तं हस्तेन पाशहस्तः प्रकोपितः ॥ ४६
चित्रगुप्तेन सहितो ययौ शिवपुरं प्रति ।
तत्क्षणेनैव कैलासे शंकरं शशिशेखरम् ॥ ४७
पार्वतीसहितं दृष्ट्वा मुनीन्द्रैः सनकादिभिः ।
गङ्गाद्यैश्च सरिद्भिश्च सेवितं दिवि संस्थितः ॥ ४८
अपतत्पादयोस्तस्य सर्वदेवमयस्य च ।
निक्षिप्य पट्टं दण्डं च मुद्रां च क्षोभमोहितः ॥ ४९

उवाच प्रणतो भूत्वा वचनं शङ्करं प्रति ।
आ ज्ञाधरे त्वयि विभो वेलातिक्रमणं यदि ॥ ५०
भवेत्सर्वमतिक्रान्तं नाथे कारुण्यसागरे ।
वायुर्न वाति सूर्यश्च न तपेच्च यमस्तथा ॥ ५१
अग्निरुष्णत्वमुत्सृज्य शीतो भवति लङ्घिते ।
अयं तु पतितो भूत्वा ब्रह्मयोनिसमुद्भवः ॥ ५२
चण्डालीसहितो भूत्वा तत्पुत्र्या सह रम्य च ।
पुत्रानुत्पाद्य पापात्मा मद्यमांसपरायणः ॥ ५३
यावज्जीवं जीवघाती महापापरतस्तथा ।
शिवलोकं कथं प्राप्य गाणपत्यमवाप्तवान् ॥ ५४
पुण्यहीनस्य देवेश गतिरेवंविधा यदि ।
ममाधिकारस्वातन्त्र्यं मास्तु स्थास्ये तवाग्रतः ॥ ५५
धर्मराज वचः श्रुत्वा यमं प्रोवाच शूलधृत् ॥ ५६
प्राग्गृहेश्वरमाहात्म्यात् स्थानस्याधिनिवासनात् ।
सम्मार्जनेना लयस्य मधुतीर्थनिषेवणात् ॥ ५७
गतिरेवंविधा भूता दण्डपाणे यमान्तक ।
शिवलोकन्तु संप्राप्य गाणपत्यमवाप्तवान् ॥ ५८
एकान्तदर्शनेनापि मुक्तो भवति नान्यथा ।
जन्मकोट्या कृतं पापं शूलटंकस्य दर्शनात् ॥ ५९
अवधूय क्षणेनैव शिवलोकमवाप्यते ।
अस्मत्सान्निध्यसामर्थ्यादादिकाले विशेषतः ॥ ६०
यस्तावच्छिवसन्निधौ च रमयन् स्थित्वा क्षणं गम्यते
चण्डाली सहितोऽपि मद्यनिरतः दैवात् द्विजः क्षत्रियः ।

वैश्यो वा यदि शूद्रयोनिजनितः पाषण्डवृत्त्याश्रितः
सर्वं पापमपास्य शूलनयनो भूत्वा च मुक्तिं व्रजेत् ।। ६१

इति ज्ञातानुभावस्त्वं शिवक्षेत्र निवासिनम् ।
नमस्कृत्य मदाकारं दृष्ट्वा गच्छ यथेच्छया ।। ६२

क्षम्यतामपराधं च शिवदूतकृतं प्रभो ।
दण्डपट्टे गृहाण त्वं गच्छ शीघ्रं यथासुखम् ।। ६३

श्रुत्वा शिववचः सार्थं ज्ञातशैवप्रभाववान् ।
धर्मराजो यथा पश्चात् चित्रगुप्तेन संयुतः ।। ६४

प्रणम्य च शिवं प्रायात् यमस्संयमिनीं प्रति ।
एकाहमपि यः कुर्यात् प्राग्गृहेश्वरदर्शनम् ।। ६५

स मुक्तस्सर्वपापेभ्यः शिवेन सह मोदते ।
तस्माद्यूयं वसध्वं वै महापाप विमुक्तये ।। ६६

इत्याग्नेयपुराणे प्राग्गृहेश्वरमाहात्म्ये एकविंशोऽध्यायः ।।

## ।। अथ पञ्चपञ्चाशोध्यायः ।।

सूतः-

शृणुध्वं मुनयस्सर्वे सावधानेन चेतसा ।
पूजाविधिं प्रवक्ष्यामि तत्फलं प्राग्गृहेश्वरे ।। १

मल्लिकाजातिकुसुमैः करवीर प्रसूनकैः ।
द्रोणैः कुसुमकल्हारैः कुमुदैरति सौरभैः ।। २

पङ्कजैरुत्पलैश्चैव वासन्ती सुमपाटलैः ।
प्राग्गृहेशं समभ्यर्च्य नैवेद्यं कुरुते तु यः ।। ३

स संपूज्यो देवगणैरिन्द्राद्यैरप्सरोगणैः ।
वसेद्धि नाकपृष्ठे च यावदिन्द्राश्चतुर्दश ।। ४

लोपामुद्राविवाहार्थं अगस्त्यो भगवान् मुनिः ।
आदीश्वरं प्राग्गृहे च सर्वसिद्धनिषेविते ।। ५

व्यासाद्यैर्मुनिभिश्चैव नारदाद्यैस्तपोधनैः ।
सनकादि मुनीन्द्रैश्च सर्वदेवैश्च सेविते ।। ६

आदित्यैर्वसुभिश्चैव विमानवरसंस्थितैः ।
वेदैष्षडंगसहितैः अन्वितैस्सकलेतरैः ।। ७

कृत्वा पूजामनलसः त्रिविधैः करणैरपि ।
तेपे स ब्रह्मसदृशो लोपामुद्रापरिग्रहे ।। ८

ऋषयः-

मानसी कीदृशी देव वाचकी कीदृशी प्रभो ।
कायिकी कीदृशी प्रोक्ता तासां भेद इहोच्यताम् ।। ९

मानसी तु हृदब्जे वै कोटि सूर्यसमप्रभे ।
इच्छाशक्ति ज्ञानशक्ति क्रियाशक्ति समन्विते ।। १०

कालत्रयेण सहिते जगन्मण्डलमण्डिते ।
शुद्धस्फटिक सङ्काशे वैडूर्यमणिनिर्मिते ।। ११

रत्नसिं हासने दिव्ये योगध्याननिनिर्मिते ।
सकलं निष्कलं चैव ध्यायेत्तं मानसी भवेत् ।। १२

वाचिकीं तु प्रवक्ष्यामि शृण्वन्तु मुनयोऽधुना ।
आनन्दनिर्भरो भूत्वा पुलकाङ्कितविग्रहः ।। १३

वेदोपनिषदां वाक्यैस्स्तोत्रपाठैरनेकधा ।
पुराणपठनैश्चापि वेदपारायणादिभिः ।। १४

अहर्निशं स्तुतिर्या तु वाचिकी समुदाहृता ।
कायिकीं शृणु पूजां वै क्लेशेन महता युताम् ।। १५
सम्मार्जनालेपनाद्यैर्मालादिकरणैस्तथा ।
धूपचन्दनकस्तूरीकुंमादिविलेपनैः ।। १६
प्राकारगोपुराट्टालमण्टपादिविधानकैः ।
उद्यानारामवृक्षाणामारोपणविधानकैः ।। १७
महानैवेद्यसंयुक्तफलपूजादि पूजनैः ।
नित्यं यः कुरुते भक्त्या कायिकी समुदाहृता ।। १८
एवं विधाभिः पूजाभिरुपचा रैरहर्निशम् ।
आदीशं पूजयामास वर्षाणां तु सहस्रकम् ।। १९
ततो देवः प्रसन्नात्मा ह्यगस्त्य वरदोऽभवत् ।
ईश्वरः-
कुंभजात महाबुद्धे वरयस्व यथेप्सितम् ।। २०
वरं दत्वा वरार्हाय करिष्ये प्रीतिमुत्तमाम् ।
इति देवेन सन्दिष्टो भगवान् कुंभसंभवः ।। २१
अगस्त्यः-
नमः परमरूपाय परात् परतराय च ।। २२
अणोरणीयसे तुभ्यं महतां महते नमः ।
कारणत्रयहीनाय कारणानां च हेतवे ।। २३
जगत्कारणरूपाय जगद्रूपाय ते नमः ।
जगतां पतये तुभ्यं पशूनां पतये नमः ।। २४
आद्यन्तमध्यशून्याय सर्वलोकहिताय च ।
भक्तहृत्पङ्कजस्थाय परापरविधायिने ।। २५

परब्रह्मस्वरूपाय परमात्मस्वरूपिणे ।
मनोरथपथातीतरूपिणेऽरूपिणे नमः ॥ २६
सत्वादिमूर्तिभेदाय जगत्त्रयधराय च ।
ब्रह्मविष्णुमहेशानरूपिणे लोकहेतवे ॥ २७
ऋग्वेदरूपिणे तुभ्यं यजुर्वेदस्वरूपिणे ।
सामवेदस्वरूपाया थर्ववेदस्वरूपिणे ॥ २८
अङ्गोपाङ्गस्वरूपाय शास्त्राणां च स्वरूपिणे ।
सर्वशक्तिमहाविद्या धारिणेऽनन्तशक्तये ॥ २९
नमो वेदान्तवेद्याय पुराणपुरुषाय च ।
प्रकृत्या मायया छन्नविग्रहायोग्ररूपिणे ॥ ३०
विद्यामयाय नीलाय पत्तीनां पतये नमः ।
वत्सराणां स्वरूपाय अयनानां स्वरूपिणे ॥ ३१
मासानां च स्वरूपाय पक्षाणां च स्वरूपिणे ।
नक्षत्राणां स्वरूपाय योगानां च स्वरूपिणे ॥ ३२
संसर्पाहस्पतीनां च रूपिणे परभूतये ।
गुणत्रयस्वरूपाय गुणातीताय ते नमः ॥ ३३
मायाधराय मायाय मायारहितमूर्तये ।
इति स्तुतो महादेवः पार्वतीरमणः प्रभुः ॥ ३४
कुंभोद्भवेन मुनिनाऽकामिना निर्मलात्मना ।
वरदाने कृतमतिः चिन्तयामास तं द्विजम् ॥ ३५
पस्पर्श ब्रह्मरन्ध्रे तु हस्तेन कुशलक्ष्मणा ।
सोऽपि तद्धस्तसंस्पर्शविनुतध्यानवैभवः ॥ ३६
अपश्यत् पुरतस्स्थाणुं कैलास सदृशप्रभुम् ।
भस्मोद्धूलितसर्वाङ्गं त्रिपुण्ड्रांकित मस्तकम् ॥ ३७

नागयज्ञोपवीतं च नागाभरण भूषितम् ।
नागचर्म वसानं च नागहारं विभूषितम् ।। ३८
दृष्ट्वा पशूपतिं देवमनन्त गणसेवितम् ।
आनम्य शिरसा भूमौ कृतांजलिपरिग्रहः ।। ३९
वरेण छन्दयामास आदीश्वरमनादिकम् ।।

अगस्त्यः-

स्वामिन् संसारसौख्यं च ज्ञात्वा ह्रा पार्वतीप्रिय ।। ४०
सत्कलत्र सहायोऽहं कृत्वा यज्ञादिकान् विभो ।
वरमोक्षं गमिष्यामि त्वदाज्ञा वशमागतः ।। ४१
त्वदधीनं जगत् सर्वं तस्मात्त्वां प्रार्थये शिव ।
इत्यगस्त्येन विज्ञप्तो देवःशशिकलाधरः ।। ४२
वरं ददौ स मुनये गार्हस्थ्यकरणाय च ।
लोपामुद्रां ब्रह्मसुतां विवाह्य विधिवत् द्विज ।। ४३
संसारे सकलान्यज्ञान् कुरु सत्यव्रतो भव ।
एवं लब्ध्वा वरं विप्रो ह्यगस्त्यः कुंभसंभवः ।। ४४
आदीश्वरं प्रणम्याथ कवेरस्याश्रमं ययौ ।
कवेरस्तु तदाऽगस्त्यं दृष्ट्वा कलशसं भवम् ।। ४५
उपचर्योपचारैश्च पप्रच्छ कुशलं मुनिम् ।
ब्राह्मणानां मुनीनां च यो धर्मोऽभिमतः सताम् ।। ४६
कच्चित्ते कुशलं विद्वन् वदस्व मम सन्निधौ
इति पृष्टः कवेरेण मैत्रावरुणिरब्रवीत् ।। ४७
सर्वो धर्मो मया विद्वन् रक्षितो वेदमार्गतः ।। ४८
प्रकल्प्य पर्णशालां च स्वस्याश्रममथाविशत् ।
कालान्तरेण सस्त्रीकः पुनरीशानमादरात् ।। ४९

प्रार्थयामास सन्तोषात् मम नाम भविष्यति ।
अगस्त्येश्वरनामा त्वं आदीश्वर कृपानिधे ।। ५०

सन्तोषोत्फुल्लनयनः प्रसन्नाननपङ्कजः ।
अगस्त्येश्वर नाम्ना च स्वनाम कृतवान् प्रभुः ।। ५१

आदीश्वरस्तदाऽऽरभ्य अगस्त्येशत्वमाप्तवान् ।
अगस्त्योऽपि ततः पश्चात्प्रतीच्यामालयस्य च ।। ५२

मधुकाननमध्ये तु मधुतीर्थस्य पश्चिमे ।
अग्निष्टोमादिकानिष्ट्वा लोपामुद्रासहायवान् ।। ५३

मोक्षार्थं वासमकरोत् ब्रह्मण्यस्सत्यसंगरः ।
तीर्थानामुत्तमे तीर्थे मधुतीर्थे त्रिराप्लुतः ।। ५४

ब्रह्मयज्ञादिकान् कृत्वा देवयज्ञादिकानपि ।
स्थिरतां प्राप्य पुण्यात्मा स लोपामुद्रया सह ।। ५५

यस्तावत्पूजयेद्देवं भक्त्या परमया युतः ।
कायेन मनसा वाचा स गच्छेच्छिवमन्दिरम् ।। ५६

निष्कप्रमाण तैलेन तत् प्रमाणेन वर्तिना ।
दीपमारोपयत्याशु स दिव्यज्ञानवान् भवेत् ।। ५७

एवं दीपत्रयं यस्तु कुरुते पापमुक्तये ।
दिशो विभासयन् याति कैलासं पर्वतोत्तमम् ।। ५८

प्रस्थमात्रेण गव्येन कपिलासंभवेन च ।
मधुना सहितेनैव तिलतैलेन वा पुनः ।। ५९

आदीशमभिषिञ्चेत स त्रिणेत्र समो भवेत् ।
द्रोणमात्रेण गव्येन पयसा चाभिषेचनम् ।। ६०

कुरुते सोमवारे तु सायंकाले विशेषतः ।
हिमशुभ्रविमानेन स याति शिवमन्दिरम् ।। ६१

पनसैर्नालिकेराद्यैर्दधिमध्वाज्यसंयुतैः ।
फलाभिषेकं वैशाखे विशाखायां करोति यः ॥ ६२
इह भुक्त्वा तु भोगांश्च पुत्रपौत्रादिसंयुतः ।
तदन्ते शिवसालोक्यं ततः सायुज्यमाप्नुयात् ॥ ६३
शुद्धोदकैर्घटशतैर्मधुतीर्थसमुद्भवैः ।
यः स्नापयेदादि लिङ्गं स गङ्गां धारयेद् ध्रुवम् ॥ ६४
कौसुंभरञ्जितैर्वस्त्रैरलङ्कारं करोति यः ।
स रमेदुर्वशीलोके यावदिन्द्राश्चतुर्दश ॥ ६५
नैवेद्यं कुरुते यस्तु पञ्चभक्ष्यैः समन्वितम् ।
तेन तृप्तं भवेत्सद्यः ससुरासुरमण्डलम् ॥ ६६
अशक्तस्तु तदर्धेन तदर्धेनाथ शक्तितः ।
निवेद्य ब्राह्मणान् भोज्य तच्छेषं भुञ्जते पुमान् ॥ ६७
स तत्क्षणेन लभते गाणपत्यपदं ध्रुवम् ।
मधुकाननमध्ये तु प्राग्गृहेश्वरसन्निधौ ॥ ६८
पशुपक्षिमृगादीनां क्षुधार्तानां विशेषतः ।
अन्नं ददाति यो मर्त्यः सर्व भूतहिते रतः ॥ ६९
शाश्वतं पदमभ्येत्य तत्रैव स्थीयते चिरम् ।
आदीशं चंपकैः पुंष्पैर्मालां कृत्वा शिवार्चनम् ॥ ७०
करोति वर्णबाह्योऽपि सनागा भरणो भवेत् ।
बिल्वपत्रशतेनैव चिरिबिल्व सहस्रकैः ॥ ७१
कार्तिक्यां सोमवारे तु पूजयेद्यस्तु मानवः ।
स गङ्गाचन्द्रलेखाभ्यां शोभते वृषमास्थितः ॥ ७२
सदाऽभिषेकं यः कुर्यात् चैत्रवैशाखमासयोः ।
ब्रह्महत्यादयो दोषाः तस्य नश्यन्त्यसंशयम् ॥ ७३

सौरकार्तिकमासे तु एवं मासं व्रतान्वितः ।
पत्रैरामलकोद्भूतैः पर्णक्षतविवर्जितैः ।। ७४

ब्राह्मणः- क्षत्रियो वाऽथ वैश्यः शूद्रोऽङ्गना तथा ।
पूजये दादिदेवं च तेषां मुक्तिः करे स्थिता ।। ७५

य एतच्छ्रावयेन्नित्यं ब्राह्मणानां समाहितः ।
शृणुयात् भक्तिसंयुक्तः स याति परमां गतिम् ।। ७६

इत्याग्नेयपुराणे प्राग्गृहेश्वरमाहात्म्ये षड्विंशोध्यायः ।।



## ।। षट्पञ्चाशोऽध्यायः ।।

ऋषयः-

मधुकाननमध्ये तु मधुतीर्थमिति श्रुतम् ।
केन वा निर्मितं पूर्वं नाम कीदृग्विधं च यत् ।। १

अधिदेवं च वृक्षं च विस्तरेण यथा तथा ।
स्नानकालं विशेषं च मासवारादिकं च यत् ।। २

वदस्व भगवन् सूत त्वत्कथाऽमृतपायिनाम् ।
तृप्तिर्न जायते भूयः कथाश्रवणकौतुकात् ।। ३

सूतः-

प्राग्गृहेश्वरसंज्ञायाः सङ्ग्रहेण न विस्तरात् ।। ४

एतेषां कारणं वच्मि यथावचनपूर्वकम् ।
मधुकैट भनामानावसुरौ तत्र कानने ।। ५

असमानौ जगत्पीडां कुर्वन्ता वनिशं पुरा ।
इन्द्रामरनियोगाच्च तद्वधं कर्तुमुद्यतः ।। ६

मधुकैटभसंहारमादिकाले स्वयं हरिः ।
कृत्वाऽरक्षत् भुवं सर्वां तेनैतन्मधुकाननम् ।। ७
मधुतीर्थस्य वक्ष्यामि कारणं भुवि विश्रुतम् ।
पुरा कैलासशिखरात् शङ्करः शशिशेखरः ।। ८
नन्दीश प्रमुखैर्भूतगणैरपि समावृतः ।
मातृकाभिर्योगिनीभिर्वसुविश्वामरादिभिः ।। ९
इन्द्रादि लोकपालैश्च सनकादिमुनीश्वरैः ।
गन्धर्वयक्षप्रमुखैरुरगैः किन्नरादिभिः ।। १०
पातालवासिभिश्चैव तथा नाक निवासिभिः ।
पार्वत्या सहितो भूत्वा वृषमारुह्य शूलधृत् ।। ११
प्राग्गृहेऽवातरद्देवो ब्रह्मणः प्रलयान्तरे ।
कैलासागमनात् श्रान्ताः क्षुत्पिपासा श्रमान्विताः ।। १२
इन्द्रादयः सुरगणा मधूनि मधुकानने ।
पीत्वा द्रोणप्रमाणानि कृत्वा क्षेत्रं च कर्दमम् ।। १३
मधुना हर्षिता भुक्त्वा चक्रुर्गर्तमथौजसा ।
अथ देवास्समागत्य भगवन्तमुमापतिम् ।। १४
नमश्चक्रुः पृथक् सर्वे तदा देवोऽब्रवीद्वचः ।
देवाः कुतो गता यूयं प्राप्ताः कुत्र किमाश्रिताः ।। १५
वदध्वमस्मत्पुरतो भवन्तः परमार्थतः ।
देवास्तदाऽवदन् सर्वे मधु पीतं प्रभो इति ।। १६
मधुकाननमध्ये तु मधुपानस्थले तु यत् ।
पीतशेषेण मधुना ह्यवटोत्तममंजसा ।। १७
अस्माभिः कृतमित्यस्मात् मधुतीर्थं भविष्यति ।
सर्वेषामेव देवानामानन्दजननं यतः ।। १८

स्नानानामत्र देवेश सर्वभाग्यविवृद्धये ।
अनुगृहाण भगवन् देवतां च प्रकल्पय ।। १९
तीर्थप्रसिद्ध्यै भगवन् वृक्षं च कृपया कुरु ।
इति संप्रार्थितो देवः कल्पयामास तत्पृथक् ।। २०
देवतां विघ्नराजं च स्नातानां च फलप्रदम् ।
एतत्तीर्थ प्रसिद्ध्यर्थं मधूको वृक्ष उच्यते ।। २१
स्नानकालं प्रवक्ष्यामि सर्वलोकोपकारकम् ।
चैत्रादिषु च मासेषु स्नातानां तु फलं पृथक् ।। २२
चैत्रे मासे सोमवारे मध्याह्ने भक्तिसंयुतः ।
यस्स्नाति मनुजो लोके स याति शिवतुल्यताम् ।। २३
वैशाखे भृगुवारे च दूर्वाऽक्षतफलैः सह
स्नानं च कुरुते भक्त्या तस्य लक्ष्मीः स्थिरा भवेत् ।। २४
दारिद्र्यं च न जायेत तस्य जन्मनि जन्मनि ।
समग्रा श्रीर्भवत्येव नात्र कार्या विचारणा ।। २५
ज्येष्ठे तु शुक्लपक्षे तु मन्दवारे विशेषतः ।
स्नायात् कृष्णतिलैः सार्धं शनिनाम जपन् बुधः ।। २६
कोणश्शनैश्चरो मन्दः छायाहृदयसंभवः ।
मार्ताण्डजस्तथा सौरिः पातंगी ग्रहनायकः ।। २७
एतानि मन्दनामानि यो जपेत् तीर्थसन्निधौ ।
शनैश्चरकृता पीडा न कदाचित् भविष्यति ।। २८
राहुकेतुग्रहाणां च पीडा मृत्युभयं च यत् ।
तत्क्षणेनैव नश्यन्ति स्नानमात्रेण चैव हि ।। २९
आषाढे कृष्ण पक्षस्य गुरुवारे निराशनः ।
स्नायान्मौनं समाश्रित्य नाभिदघ्नजले स्थितः ।। ३०

तस्य देवगुरोः पीडा द्वादशस्थानगस्य च ।
एकेन स्नानमात्रेण जायते न च देहिनाम् ॥ ३१
श्रावणे श्रवणर्क्षे तु शनिवारेण संयुते ।
ब्रह्महत्त्यानिवृत्त्यर्थं स्नायात् भक्तिसमन्वितः ॥ ३२
स्नानमात्रेण तस्याशु ब्रह्महत्त्या विनश्यति ।
कूश्माण्डग्रहपीडा च डाकिनीपूतनादि च ॥ ३३
वेतालाश्चैव नश्यन्ति पिशाचाः स्नानमात्रतः ।
मासि भाद्रपदे यस्मिन् शुक्लपक्षे चतुर्दशी ॥ ३४
सौम्य वारेण युक्ता चेत् स्वर्णस्तेयनिवारिणी ।
तस्यामुद्बुध्य मन्त्रेण बुधं संप्रार्थ्य वाग्यतः ॥ ३५
ऐशान्याभिमुखः स्थित्वा दिगीशं च प्रणम्य च ।
स्वर्णस्तेयोद्भवं दोषं हरस्वेत्यभिवाद्य च ॥ ३६
त्रिस्स्नायात् कण्ठदघ्ने च जले विमलमानसः ।
तत्क्षणादादिनाथस्य कृपया मधुतीर्थके ॥ ३७
पूतो भवति च स्तेयी नान्यथा जन्मकोटिभिः ।
अश्वयुक् शुक्लनवमी भृगुवारेण संयुता ॥ ३८
दुर्गाप्रीतिकरी ज्ञेया महदैश्वर्यदायिनी ।
तस्यां तिथौ मधोस्तीर्थे देवेन सह मोदते ॥ ३९
पूर्वं प्रदक्षिणीकृत्य नमस्कारत्रयं तथा ।
कृत्वा शुक्लतिलैर्युक्तः स्नायादेकान्तभक्तितः ॥ ४०
अणिमादिषु सिद्धानां सोऽपि राजा भविष्यति ।
एवं वर्षत्रयं यस्तु कुरुते नियमेन तु ॥ ४१
महासेनापतिर्भूत्वा पुत्रान् पौत्रांश्च विन्दति ।
यावत्सन्ततिवर्गेण सर्वभाग्याधिको भवेत् ॥ ४२

यदा वृश्चिकमागच्छेद्भास्करोऽरुणसारथिः ।
तन्मासे भानुवारे तु षट्कर्मपरिपालकः ।। ४३

स्नातानामायुरारोग्यं भजेत् कष्टविमोचनम् ।
धनुर्गते सवितरि सोमवारयुता यदि ।। ४४

आर्द्रा तस्यां यः कुरुते स्नानं च मधुतीर्थके ।
गोवधेनोद्भवं दोषं तत्क्षणेन विनश्यति ।। ४५

जन्मान्तरसहस्रेषु सञ्चितं पापमुल्बणम् ।
तत्क्षणेन लयं याति नात्र कार्या विचारणा ।। ४६

यदा च मकरं गच्छत्यादित्यस्सुरपूजितः ।
तदाऽऽरभ्य मधोस्तीर्थे माघस्नानं करोति यः ।। ४७

सोऽश्वमेधसहस्रस्य प्राप्नोत्यविकलं फलम् ।
न तस्य क्षीयते लोकः शिवस्य गिरिजापतेः ।। ४८

शिवस्य च गणो भूत्वा शिवेन सह मोदते ।
कुंभराशिगते भानौ मधुतीर्थनिषेवणम् ।। ४९

कुजवारे तु यः कुर्यात् कुत्सिताचारवानपि ।
मद्यपानोद्भवं दोषं सर्वतस्करजं तथा ।। ५०

मयोभूरिति मन्त्रेण जानुदघ्नजले स्थितः ।
जलं प्राश्यापि पापात्मा कुरुते स्नानमात्रतः ।। ५१

स मद्यपानदोषात् तन्मुच्यते तस्करादपि ।
मद्यपः स्त्रीमुखं जिघ्रन्नपि मुच्येन्न संशयः ।। ५२

मोहाद्वा यदि वा लोभात् परस्त्रीमुख चुंबनम् ।
कुर्यात्स मुच्यतेऽत्रैव नान्यत्राब्दशतैरपि ।। ५३

मत्स्यराशिगते सूर्ये पौर्णमास्यां विशेषतः
स्नानं च कुरुते यस्तु मुच्यते गुरुतल्पगः ।। ५४

यदंतरिक्षमन्त्रेण स्नात्वा चापः पिबेत् पुनः ।
अनेककोटिजननैरार्जितं पापराशिभिः ॥ ५५
तत्क्षणेनैव मुच्येत मन्त्र पूतेन वारिणा ।
एतस्मात् कारणाद्विप्रा मधुतीर्थं महत्तरम् ॥ ५६
एतेषु पुण्ययोगेषु यस्स्नात्यभिरतो द्विजः ।
चतुर्दशसु लोकेषु विचरेत् सिद्धपूरुषः ॥ ५७
अनेके ऋषयस्सर्वे मुनयस्संशितव्रताः ।
सपत्नीकास्सपुत्राश्च वसन्ति कृतिनोऽमलाः ॥ ५८
प्राग्गृहस्य प्रवक्ष्यामि कारणं द्विजपुङ्गवाः ।
कैलासा दागतश्शम्भुर्देवै रिन्द्रपुरोगमैः ॥ ५९
कृतमालयमभ्येत्य सर्वालङ्कारशोभितम् ।
प्राकारवलभीयुक्तं मण्टपैरतिविस्तृतम् ॥ ६०
सर्वदेव समाकीर्णं प्रोवाच भगवान् हरः ।
अस्मद्गृहमिदं पूर्वं कृतं युष्माभिरादरात् ॥ ६१
प्रसिद्धिं यातु हे देवाः प्राग्गृहं भुवनत्रये ।
यानि लोके स्वयंभूनि काश्यादिन्यपि भूतले ॥ ६२
तेषां पुण्यतमं भूमौ लोकोपकरणाय वै ।
तस्मादेतन्मम स्थानं संप्रीतिजननं यतः ॥ ६३
इतीशेनाभ्यनुज्ञाताः देवा देवेन्द्र सम्मुखाः ।
स्वं स्वं लोकं प्रयाताश्च विमानारूढमूर्तयः ॥ ६४
ऋषयो मुनयस्सर्वे पुत्रपौत्र समृद्धये ॥ ६५
भवन्तश्च तथा श्रद्धां कुर्वंत्वस्मिन् जले स्थिताः ।
य इदं श्रावयेन्नित्यं आदीशस्य च सन्निधौ ॥ ६६

तस्य मुक्तिः करस्था च कैवल्यं लभते ध्रुवम् ।
तीर्थमाहात्म्यमेतच्च कथितं सङ्ग्रहेण वै ।। ६७
विस्तरेण प्रवक्तुं चेत् शेषेणापि न शक्यते ।। ६८

इत्याग्नेयपुराणे प्राग्गृहेश्वरमाहात्म्ये सप्तविंशोऽध्यायः ।।

## ।। अथ सप्तपञ्चाशोऽध्यायः ।।

श्री सूतः-

एतत्तीर्थ प्रभावज्ञा मुनयः पुण्यगौरवात् ।
अत्रैव वासं चक्रुर्ये तान् प्रवक्ष्ये मुनीश्वराः ।। १
अगस्त्यो गौतमो गार्ग्यः पुलस्त्यः पुलहः क्रतुः ।
रथीतरोऽङ्गिराश्चैव सुमन्तुः पैल एव च ।। २
एकपादोर्ध्वबाहुश्च पर्णाशनतृणाशनौ ।
रोमशो गुणहारी च वक्रकेशः तथैव च ।। ३
पिप्पलादो बृहत्कुक्षिस्ते सर्वे पुत्रपौत्रिणः ।
शिष्य प्रशिष्यैस्सहिताः सर्वे लंब जटाधराः ।। ४
वेदाध्ययननिष्ठाश्च सदा ध्यानप रायणाः ।
मधुकाननमध्ये तु मधुतीर्थतटेषु च ।। ५
अवसन् मुक्तये तत्र कल्पे राथन्तरे पुरा ।
तदा कश्चित् महाराजः सूर्यवंशसमु द्भवः ।। ६
अग्निध्वज इति ख्यातो दशार्णानामधीश्वरः ।
पाषण्डाश्रममास्थाय वर्णाश्रमविवर्जितः ।। ७
जटालिङ्गधरो भूत्वा भस्मोद्धूलितविग्रहः ।
अग्निहोत्रादिकान् कृत्वा पितृकार्यविवर्जितः ।। ८

देवकार्यविहीनस्तु पाषण्डिभिरहर्निशम् ।
सहितो वञ्चकैर्धूर्तैः पापं घोरं महत्तरम् ।। ९
कुर्वन् तैरागतो दैवान् सह्यजातीरमाश्रितः ।
गौरीमायूरवल्मीकस्थानयोरुत्तमं शुभम् ।। १०
मधुकाननमध्ये तु मधुतीर्थमवाप सः ।
तत्रस्थं ऋषिमध्यस्थमगस्त्यं च जटाधरम् ।। ११
रुद्राक्ष मालाभरणं त्रिपुण्ड्रांकितमस्तकम् ।
साक्षादीश्वरतुल्यं च दर्शनाद्भुतविग्रहम् ।। १२
अनुष्ठानान्तरे पश्यंस्तत्सकाशे मुनेस्तदा ।
नमश्चकार विप्रेन्द्र राजा पाषण्डिभिर्युतः ।। १३
तदा त्वगस्त्यः प्रोवाच भगवान् कुंभसंभवः ।
कुतो भवान्समायातः विकृतं रूपमास्थितः ।। १४
एते जटाधराः के वा भवन्तं किं समाश्रिताः ।
इति पृष्टस्तदा राजा प्रोवाच परमादरात् ।। १५
स्वामिन्नहं राजवर्यः पाषण्डपदमोहितः ।
प्राप्तोऽहमीदृशं पापमिदानीं मुक्तिमागतः ।। १६
तव सन्दर्शनादेव स्थानमाहात्म्यगौरवात् ।
पापान्मुच्येः कथमहं तथा कुरु कृपां मयि ।। १७
हन्त पाषण्डिनः पापं मां प्रलोभ्य नराधमाः ।
एनामवस्थां संप्राप्य तूर्ष्णीं तिष्ठन्ति वै मुने ।। १८
एतेषामपि मे नाथ मोक्षं कुरु कृपानिधे ।
नान्यत्राहं गमिष्यामि त्वमेव गतिरद्य नः ।। १९
पापापनुत्त्यै सर्वेषां पाषण्ड्य परिशान्तये ।
हे राजन् तव भाग्येन प्राप्तं स्थानमिदं महत् ।। २०

एतेषां तव साहाय्यात् पापमोक्षो भविष्यति ।
इति श्रुत्वा महाराजस्सर्वे पाषण्डिनस्तथा ।। २१
अस्मिन्पुण्यतमे स्थाने मधुतीर्थे विशेषतः ।
स्नात्वाऽऽदिलिङ्गं पश्यन्तः कर्मणा मनसापि च ।। २२
वचसापि महाराजः सर्व पापविमुक्तये ।
नमस्कृत्वा यथान्यायं सर्वे लब्धवरास्तदा ।। २३
मधुतीर्थे विधानेन स्नानं चक्रुः पृथक् पृथक् ।
स्नात्वाऽऽदि देवदेवेशमनन्तमपराजितम् ।। २४
नेमुः प्रांजलयो भूत्वा अग्रिध्वजपुरस्सराः ।
प्रदक्षिणत्रयं कृत्वा द्वारदेशे स्थिताः पुनः ।। २५
तदा दिष्ट्या महामेघा महापर्वतसन्निभाः ।
विद्युन्निर्घातसहिता ववर्षुः करकान्विताः ।। २६
तेऽपि राजप्रधानाश्च पतिताशनिपीडिताः ।
न शेकु र्जीवितुं गन्तुं पञ्चत्वं च तदा गताः ।। २७
यस्मिन्क्षणे पञ्चतां च ययुरग्रिध्वजादयः ।
यस्मिन्नष्टोत्तरशतं विमानानां समागतम् ।। २८
किङ्किणीजालसहितं पताकाध्वजभूषितम् ।। २९
सर्वे तानि समारुह्य ययुरिन्द्रालयं प्रति ।
स्मर्तुं गन्तुं तथा ध्यातुं द्रष्टुं च नमितुं तथा ।। ३०
जन्मकोटिसहस्रेषु जायते मतिरीदृशी ।
चतुर्णामपि वेदानामधीयानस्य यत्फलम् ।। ३१
गङ्गादि सर्वतीर्थेषु स्नातानां यत्फलं भवेत् ।। ३२
भूप्रदानेन यत्पुण्यं गोप्रदाने च यत्फलम् ।
दर्शनादादिदेवस्य लभन्ते मनुजा भुवि ।। ३३

अग्निध्वजस्य चरितमध्यायं पठते द्विजः ।
शृणुयात्सावधानेन सोऽश्वमेधफलं लभेत् ।। ३४
आदीशपश्चिमे भागे मधुतीर्थस्य पूर्वतः ।
पितॄनुदिश्य ये कुर्युः पिण्डदानं द्विजोत्तमाः ।। ३५
गङ्गायां शतवारं तु धर्मपृष्ठे तथैव च
गयायां वटमूले तु यत्कुर्या त्तत्फलं भवेत् ।। ३६
तिलगोधूमपिष्टेन तथा वा शालितण्डुलैः ।
माषचूर्णेन सहितं पिण्डं दत्वाऽ क्षयं भवेत् ।। ३७
प्राग्गृहेश्वरके क्षेत्रे स्त्री वा पुरुष एव वा ।
मासोपवासं यः कुर्याज्जीवन्मुक्तो भवेद्ध्रुवम् ।। ३८
पितॄणां मुक्तये यस्तु श्राद्धं च मधुतीर्थके ।
आदीशसंनिधावेव कुर्यात् श्रद्धासमन्वितः ।। ३९
तेषां तस्य पितॄणां च मोक्षो भवति नान्यथा ।
तिलमिश्रं च यः कुर्यात्तर्पणं गोत्र नामभिः ।। ४०
दर्शे तृप्तिरनन्तः स्यात् स्वर्गप्राप्तिर्ध्रुवा भवेत् ।
माघान्ते शिवरात्र्यां च जागरं यः करोति सः ।। ४१
पुराणपठनेनैव विरूपनयनो भवेत् ।। ४२

परमशिवमनन्तं चादिदेवादिसंज्ञं
भजत नमत भक्त्या ध्यानपूजोपचारैः ।
मधुवनभुवि मध्येऽगस्त्यमुख्यैर्नरेन्द्रैः
परिवृतमनिशं तं पार्वती प्राणनाथम् ।।

इत्याग्नेय पुराणे प्राग्गृहेश्वरमाहात्म्ये अष्टाविंशोध्यायः

## ।। अष्टपञ्चाशोऽध्यायः ।।

ऋषयः -

कियदायामविस्तारसंयुतं प्राग्गृहं मुने ।
वक्तुमर्हसि नो सूत त्वत्कथामृतपायिनाम् ।। १

सूतः -

एतत्स्थान प्रमाणन्तु वक्तुं श्रोतुं द्विजोत्तमाः ।
शक्यते वर्षकोटीभिर्नैव शेषस्य का कथा ।। २
अनन्तो वासुकिश्चैव तक्षको गुलिकस्तथा ।
शङ्खश्च पञ्च नागेन्द्रा मध्ये चतुर्षु दिक्ष्वपि ।। ३
एतत् स्थानप्रसिद्ध्यर्थं तिष्ठन्ति परया मुदा ।
अनन्तो नागपुर्यां च वल्मीके वासुकिस्तथा ।। ४
सारक्षेत्रे तक्षकस्तु मायूरे गुलिकस्तथा ।
सन्निधौ शङ्खपालस्तु क्षेत्रमेतद्दिदृक्षया ।। ५
क्षेत्रमध्यमृताये च ये च ये च जन्म लभन्ति च ।
ये च वासं प्रकुर्वंति ते देवा नात्र संशयः ।। ६
देवाश्च ब्राह्मणाः प्रोक्ता गन्धर्वाः क्षत्रियास्तथा ।
वैश्या अप्सरसश्चैव शूद्रा उरगकिन्नराः ।। ७
पिशाचा नीचजन्मान इति ज्ञातव्यमादरात् ।
ते ह वैप्राग्गृहेशस्य दर्शने सम्मतास्समाः ।। ८
आदीशस्य प्रभावेन सर्वे कैलासवासिनः ।
त्रिणेत्राः शूलहस्ताश्च सारूप्य परिवीक्षिताः ।। ९
भस्मोद्धूलित सर्वांगा जटामण्डलमण्डिताः ।
वसन्ति सुचिरं कालं विमानानि समाश्रिताः ।। १०

ऋषीणां ब्राह्मणानां च प्राग्गृहे क्षेत्रवासिनाम् ।
कुरुते जीवनोपायं तस्य पुण्यं वदाम्यहम् ।। ११
वृषमारुह्य कैलासे लोकपालैश्च पूजितः ।
प्रमथैः पूज्यमानश्च पार्वत्या वापि नन्दितः ।। १२
ईश्वरेण सह क्रीडां कुर्वन् गङ्गाधरेण च ।
स वसेत् ब्रह्मकल्पानामयुतं परमार्थतः ।। १३
मार्गे मार्गे प्रपां कुर्वन्पानीयं प्रददाति यः ।
सोऽत्र तान् भुज्यते भोगान्न च्यवेत्स दिवः क्वचित् ।। १४
कन्या गोभूमिदानानि हैरण्यन्दानमेव हि ।
कुर्वन् शिवस्य लोकार्थं तस्य पुण्यं वदाम्यहम् ।। १५
कन्याप्रदो ब्रह्मलोकं भूप्रदः सत्यसंज्ञिकम् ।
गोदानैश्चैव गोलोकं यथाकामं वसन्ति हि ।। १६
पञ्चाक्षरं प्रणवयुक्तं सान्तं यान्तेन संयुतम् ।
सान्तं हकारं यान्तं रेफं हर ओन्नमः शिवायेत्यर्थः ।। १७
जपेदत्रैव सिद्ध्यर्थं जपयज्ञपरायणाः ।
अघोरं बीजसंयुक्तं चक्रषट्कसमन्वितम् ।। १८
भुवनेशीसमायुक्तं नारीयन्त्रसमन्वितम् ।
जपेदिष्टार्थसिद्ध्यर्थं सिद्धिक्षेत्रं यतो विदुः ।। १९
सिद्धिक्षेत्र प्रभावेण पार्वती सन्निधौ ततः ।
मधुतीर्थोत्तरतटे मधुकाननमध्यके ।। २०
मधूकवृक्षस्याधस्ताज्जपे सर्वफलप्रदे ।
अणिमादि जयप्राप्तिः सर्वलोके वरो भवेत् ।। २१
तिलदानं तु यः कुर्यात् कांस्यपात्र समन्वितम् ।
संपदायुष्य सिद्ध्यर्थं ऋणमुक्त्यै च सर्वदा ।। २२

कार्तिक्यां पौर्णमास्यां तु स्नात्वा तीर्थे विशेषतः ।
गोपीचन्दन विभूति दानं च कुरुते तु यः ॥ २३
सर्वसंपत्समृद्ध्यर्थं पुत्रपौत्राभिवृद्धये ।
वैशाखे गुडदानं तु ब्राह्मणानां फलैर्युतम् ॥ २४
ददाति शिवलोकाय तस्य नास्ति यमक्षयम् ।
आदीशनिर्माल्य जलैः यःस्नाति मनुजो भुवि ॥ २५
तस्यापस्मारसंभूतव्याधिर्नश्यति तत्क्षणात् ।
मासं त्रिमासमात्रं वा पक्षं पक्षार्धमेव वा ॥ २६
देशान्तरगतो मर्त्त्यः संवसेत्पापशुद्धये ।
प्रदक्षिणत्रयं कुर्यात् नमस्कारैस्तु पञ्चभिः ॥ २७
पुनः प्रदक्षिणं कुर्यात् श्वपचोऽपि दिवं व्रजेत् ।
जातिवर्णाश्रमाचार वर्जिता ये नराधमाः ॥ २८
ते सर्वे पापनिर्मुक्ता यास्यन्ति परमां गतिम् ।
अखिलभुवनसारं सर्वशास्त्रार्थतत्वं
सकलं निगमवेद्यं सद्भिरत्यन्तकीर्त्यम् ।
जननमरणदुःखव्याधिसंसारवैद्यं
यदिममिह पुराणं तत्वतो वा मुनीन्द्राः ॥ २९
शृण्वन्तु सर्वे मुनयः समाहिता विधूतपापाः परमार्थतत्वम् ।
अतीव सुज्ञानिसुबोधनाय सिद्धं यथा सिद्धरसं च योगी ॥ ३०
महानुभावाः खलु ते मुनीद्राः भाग्याधिकाः पांसुलवर्जिताश्च ।
नोचेदिदानीं मतिरीदृशी स्यात् पापापहा पुण्य विवर्धिनी च ॥
तेषां तत् शृण्वतां नित्यं भक्तानां भक्तिगौरवात् ।
सर्वसौभाग्यसंपत्तिर्भविष्यति न संशयः ॥ ३२
इत्याग्नेयपुराणे प्राग्गृहेश्वरमाहात्म्ये एकोनषष्टितमोऽध्यायः ॥

## ।। नवपञ्चाशोऽध्यायः ।।

(स्कान्दे शिवरहस्यतः)

मुनयः-

सूत सूत महाप्राज्ञ सर्वशास्त्र विशारद ।
व्यासप्रसादसंपन्न शिवध्यानपरायण ।। १

भवन्मुखांबुजोत्पन्नं परमेशकथामृतम् ।
कर्णपात्रेण पीत्वाऽपि न तृप्ता बहुशो वयम् ।। २

तस्मात् पुनर्नो विस्तार्य सत्यानन्दस्वरूपिणः ।
कथां महेश्वरस्यान्यां प्रब्रूहि प्राज्ञ सत्तम ।। ३

इति पृष्टो मुनीन्द्रैस्तैः सूतः पौराणिकोत्तमः ।
हृदि ध्यायन् महेशानं भक्ताभीष्ट प्रदायकम् ।। ४

पार्वत्या विघ्नराजेन स्कन्देन सहितं प्रभुम् ।
उवाच नैमिशारण्य वासिनो मुनिपुङ्गवान् ।। ५

सूतः-

शृणुध्वमृषयस्सर्वे कथां परमपावनीम् ।
सांबस्य परमेशस्य लोकानुग्रहकारिणः ।। ६

द्वितीये ब्रह्मणस्तस्य परार्धे द्वापरे युगे ।
स्वायम्भुवेऽन्तरे पूर्वं विन्ध्याद्रितटकानने ।। ७

व्याधः कश्चित् कटो नाम बभूव बलवत्तरः ।
अलिन्दाख्य स्वभार्याद्यैः बन्धुवर्गैस्सुसंयुतः ।। ८

कन्दमूलफला दीनि मृगमांसानि भक्षयन् ।
विचचार मुदायुक्तः कंचित् कालमभग्नधीः ।। ९

सुखेन वर्तमानस्य तस्य काननभूमिषु ।
देवादवृष्टिः सञ्जाता अभवन्विफला नगाः ।। १०
मृगा वनान्तरं याता अभावात् तृणवीरुधाम् ।
तत्याज काननं सोऽपि जलादेरप्यभावतः ।। ११
मृगवत् जलसंयुक्तं काननं मृगसङ्कुलम् ।
फलवृक्षैरस्समाकीर्णं भार्यया सहितोऽनिशम् ।। १२
बभ्राम सर्वदेशेषु क्षुद्दाहपरिपीडितः ।
दिवारात्रं परिक्लिष्टशरीरोऽशनवर्जनात् ।। १३
एवं स्वभार्यया साकं गत्वा देशान् बहून् क्रमात् ।
पूर्वपुण्यप्रभावेन चन्दनारण्यमाप्तवान् ।। १४
तत्रत्यान् नालिकेराम्रपनसान् दाडिमानपि ।
नारङ्गान् लिकुचान् सालानश्वत्थान् वटभूरुहान् ।। १५
बिल्वान् कपित्थान् सफलान् धात्री बदरिकद्रुमान् ।
जाजीचंपक पुन्नागवकुलानर्जुनद्रुमान् ।। १६
अन्यानपि महावृक्षान् भूयान् पुष्पफलच्छदैः ।
मल्लिका मालती गुल्मानन्यांश्चापि सुपुष्पितान् ।। १७
मृगान् वराहान् महिषान् गजान् शार्दूलकानपि ।
मार्जरान् नकुलांश्चैव तथा गोधादिकानपि ।। १८
जन्तूनिष्टान् भक्षणार्हान् पनसाम्र फलानि च ।
मनोज्ञकदलीवृक्षफलजालमधून्यपि ।। १९
पङ्कजोत्पलसंयुक्ता मीनकच्छपसंयुताः ।
अकर्दमास्तथा वापीर्जलपूर्णाः सुशोभनाः ।। २०
बृहत्तटाकान् कूपांश्चाप्यतिस्वच्छजलान्वितान् ।
बहुपक्षिसमूहांश्च विविधान् सुन्दरानपि ।। २१

आम्रपाणि मुनीनां च जुष्टानि मृगपक्षिभिः ।
विमुक्तवैरैस्सन्तुष्टैः ऋषिसङ्घैश्च नित्यशः ॥ २२
प्राकारगोपुराद्यैश्च संयुतं देवमन्दिरम् ।
पश्चिमाभिमुखं लिङ्गं भक्तवर्यैः सुपूजितम् ॥ २३
दृष्ट्वा स्त्रिया युतो व्याधः सुसन्तुष्टमनास्सदा ।
काननस्यातिरम्यत्वादावासाय मतिं व्यधात् ॥ २४
विविक्ते विपिने तत्र वृक्षच्छाया समन्विते ।
कन्दमूलफलैर्युक्ते स्वावासं समकल्पयत् ॥ २५
पत्न्या साकं सुखं तिष्ठन् स्वावासे व्याधपुङ्गवः ।
मूलैः फलैश्च मांसैश्च विदधे वृत्तिमात्मनः ॥ २६
रम्ये चन्दनकान्तारे तपोधनजनैः युते ।
व्यतीताः पञ्चषड्वर्षाः व्याधस्य वसतस्सुखम् ॥ २७
एवं संवसतस्तस्य चन्दनारण्यभूमिषु ।
स्वदेशस्य स्वबन्धूनां बभूवान्वेषणे मतिः ॥ २८
ततस्स्वभार्यामाहूय प्रोवाच वचनं कटः ।
अस्मद्देशं परित्यज्य देशमन्यमुपेयुषोः ॥ २९
आवयोः सुमहान् कालो व्यतिक्रान्तश्शुभानने ।
मम सर्वे बन्धुवर्गास्तत्र तिष्ठन्ति वै खलु ॥ ३०
अस्मद्देशस्थबन्धूनां देशस्य च समीक्षणे ।
तृष्णा मे जायते साध्वि तस्मादेतद्वचः शृणु ॥ ३१
त्वया स्थातव्यमत्रैव यतवाक्काययाऽनिशम् ।
मासद्वयमहं गत्वा स्वदेशं त्वरया शुभे ॥ ३२
तत्रस्थान् बान्धवान्वीक्ष्य देशं च समृगद्विजम् ।
पुनस्त्वन्निकटं शीघ्रमागन्तास्मि वरानने ॥ ३३

वक्तव्यमेतद्वाक्यस्य न विरुद्धोत्तरं त्वया ।
साध्वी चेत्त्वं यथा प्रोक्तं तथा कुरु शुभानने ॥ ३४
इति स्वभर्त्राऽलिन्दा सा प्रोक्ता दुःखसमन्विता ।
प्रोवाच वचनं भर्तुस्सन्निधौ लज्जयाऽऽनता ॥ ३५
नाथाहं कृपणा बाला स्वबन्धुजनवर्जिता ।
विना पत्या कथमहं स्थास्यामि विजने वने ॥ ३६
नोत्स्रष्टुं च त्वया योग्या बालाऽहमिह कानने ।
इति ब्रुवन्तीं तां व्याधः प्रोवाच परिसान्त्वयन् ॥ ३७
त्वां विना मम निद्राऽपि नायात्यप्यशनेऽपि मे ।
नोदेति धीरतश्शीघ्रमागन्तास्मि त्वदन्तिकम् ॥ ३८
एवमुक्त्वा स्वकां भार्यामनुज्ञाप्य कटस्तदा ।
तया विसृज्यमानस्सन् स्वकं देशं ययौ मुदा ॥ ३९
गते तस्मिन् अलिन्दापि स्वावासात् बहिरक्षमा ।
गन्तुं विवर्णवदना व्याधपत्नी बभूव सा ॥ ४०
तदा देशान्तरात् कश्चित् व्याधस्तं देशमाययौ ।
तरुणस्सुन्दरो वाग्मी मनोज्ञनयनान्वितः ॥ ४१
पर्यटन् चन्दनारण्यं व्याधावाससमीपतः ।
तत्रस्थां तां समालोक्य स्मरबाणवशोऽभवत् ॥ ४२
स्वकीयनिलयात् साऽपि बहिर्निर्गत्य कानने ।
आहारार्थमलिन्दाऽपि बभ्राम वरवर्णिनी ॥ ४३
तत्र तं सुन्दरं व्याधं विलोक्यातीव विस्मिता ।
पञ्चबाणस्य बाणानां वशगा साऽप्यभूत् तदा ॥ ४४
एवं कालेन वसतोरुभयोस्तत्र कानने ।
स्नेहात् प्रीतिस्समुत्पुन्ना तया सङ्गोऽप्यजायत ॥ ४५

एवं प्रवर्तमानाया दुश्चरिण्यास्तदाऽचिरात् ॥ ४६
गर्भचिह्नं समालोक्य स्वभर्तुश्चापि देशतः ।
समागमनकालं च वीक्ष्य चिन्तापराऽभवत् ॥ ४७
मुहूर्तं सा विचिन्त्याथ जारं प्रति वचोऽब्रवीत् ।
मद्भर्तुरागतेः कालः सम्प्राप्तः प्रिय शीघ्रतः ॥ ४८
स्वदेशं गच्छ मां तत्र स्मर मा विस्मृतां कुरु ।
इति प्रोक्तस्तया जारस्स्वदेशं प्रययौ मुदा ॥ ४९
भर्तुरागममार्गं च भीत्या वीक्ष्य स्वमन्दिरे ॥ ५०
द्वारे स्थितायां तस्यान्तु प्रोक्तकाले कटस्तथा ।
नागतः किन्तु तत्रैव विलम्ब्य पुनरागतः ॥ ५१
साऽपि हृष्टेव तन्वङ्गी प्रत्युद्गम्य स्वकं पतिम् ।
आवासं प्राविशत्तेन कटाख्य पतिना सह ॥ ५२
बन्धुवर्गं स्वदेशस्य वृत्तान्तं च स्वकं पतिम् ।
आनुपूर्व्येण पप्रच्छ सोऽपि सर्वं व्यवेदयत् ॥ ५३
ततः कटस्स्वकां भार्यां गर्भचिह्नसमन्विताम् ।
वीक्ष्य सन्दिग्धहृदयो वचनं चेदमब्रवीत् ॥ ५४
अयि त्वमद्य मे भासि गर्भिणीव सुदुर्मते ।
मयि देशान्तरं याते स्वच्छन्दं केन वा स्थिता ॥ ५५
विहायासत्यवचनं सत्यं ब्रूहि ममाग्रतः ।
नो चेत्त्वामद्य खड्गेन हनिष्यामि न संशयः ॥ ५६
इति कोपसमायुक्तं कटस्य वचनं तदा ।
श्रुत्वा सा प्राह धैर्येण कालयोग्यं वचस्तदा ॥ ५७
प्रीत्यभावान्मयि भवानेवं वदति दुर्वचः ।
त्वां विना कंचनात्रान्यं नैव दृष्टवती दृशा ॥ ५८

गर्भाधानं त्वयैवेदं कृतं नान्येन केनचित् ।
गमनात् पूर्वकालीनदिनेषु नहि संशयः ।। ५९

इति ब्रुवाणां निर्भर्त्स्य भार्यां व्याधः पुनः क्रुधा ।
प्रोवाच वाक्यं संचिन्त्य युक्त्या सम्यक् कटाह्वयः ।। ६०

अहन्तु देशगमनात् पूर्वमेतन्न दृष्टवान् ।
गर्भचिह्नमतो दुष्टे ध्रुवं त्वं व्यभिचारिणी ।। ६१

विवाहदिनमारभ्य गर्भोऽप्राप्तोऽधुना कथम् ।
स्यादल्पकालतो नायं गर्भो मद्वीर्यसंभवः ।। ६२

इत्युक्ता सा पुनः प्राह साहसात् स्त्रीस्वभावतः ।
गर्भाधानं वर्षयोगं पुंसामायुषि निर्णयम् ।। ६३

भाग्यं वा पुरुषस्येह को वा जानाति भूतले ।
तस्मात् सर्वं दैवयोगात् भविष्यति न संशयः ।। ६४

इति ब्रुवन्त्यां तस्यां तु व्याधः कोपसमन्वितः ।
प्रोवाच वचनं सोऽपि दन्तान् कटकटापयन् ।। ६५

दैवयोगेन सर्वं चेत् भविष्यति सुदुर्मते ।
दैवस्य सन्निधौ मे त्वं प्रतिज्ञां कुरु शीघ्रतः ।। ६६

इत्युक्त्वा सा च तं प्राह प्रतिज्ञां करवाणि ते ।
यत्सन्निधौ ते विश्वासस्तत्र गत्वा न संशयः ।। ६७

श्रुत्वा भार्यावचो व्याधः कोपाग्निपरितापितः ।
उवाच वचनं दुष्टे शङ्करः सकलाधिपः ।। ६८

पश्चिमाभिमुखोऽत्रैव वर्तते हि शिवालये ।
तत्सन्निधानं त्वं गत्वा शपथं कुरु सत्यतः ।। ६९

इति प्रोक्ता नायकेन साऽलिन्दा बहुसाहसात् ।
नन्दीशमध्ये गत्वाऽऽशु स्थित्वा भीतिविवर्जिता ।। ७०

स्वामिन् उदरमध्यस्थो गर्भोऽयं मेऽस्य वीर्यतः ।
जातोऽत्र नास्ति सन्देह इति सा शपथं व्यधात् ।। ७१

नन्दीशमध्ये सा दृष्टा निर्भया बहुसाहसात् ।
असत्यं उक्तवत्याशु बुद्धिपूर्वं यदैव हि ।। ७२

तदानीं एव तत्रास्या गर्भोऽधः पतितः क्षणात् ।
ईश्वरोऽपि झटित्येव प्राङ्मुखोऽभूदहो द्विजाः ।। ६३

असत्यवार्तया यस्माद्गर्भस्स्रस्तोऽपतद्भुवि ।
तस्माच्छंभोस्तदारभ्य भ्रूणघ्नेश्वर इत्यपि ।।

लोकेऽस्मिन्नभवत् संज्ञा श्री चन्दनवनेशितुः ।
श्री वाञ्छ्येशाख्यदेवस्य भूकैलासपतेः प्रभोः ।।

कथामेतां प्रशृण्वन्ति ये जनाः श्रद्धया सह ।
पठन्ति च विमुक्तास्स्युरसत्यनिरता अपि ।।

वन्ध्याऽपि पुत्रान् लभते कथाश्रवणमात्रतः ।
अपुत्रोऽपि लभेत् पुत्रान् पठनाच्छ्रवणादपि ।।

इति श्री स्कान्दे महापुराणे शिवरहस्यखण्डे सप्तमांशे उत्तरभागे
श्री वाञ्छ्यक्षेत्रमहात्म्ये नवपञ्चाशत्तमोऽध्यायः ।।

## षष्टितमोऽध्यायः

एवं श्रुत्वा मुनिश्रेष्ठाः सूतं पौराणिकोत्तमम् ।
पप्रच्छुर्व्याधपत्नी सा कां गतिं प्रययाविति ।। १

सोऽपि तैर्मुनिभिः पृष्टस्सूतः प्रोवाच तानृषीन् ।
शृणुध्वं मुनयः सर्वे तत् क्षेत्रस्य प्रभावतः ।। २

सा च व्याधोऽपि तत्रैव चन्दनारण्यभूतले ।
उभौ स्थित्वान्त्यकाले तौ नैव दुर्गतिमापतुः ॥ ३

किं त्वत्र चिरकालं तावुषित्वा व्याधदम्पती ।
अनुभूय सुखं चान्ते सम्यक् कैवल्यमापतुः ॥ ४

इत्युक्तवन्तं सूत ते पप्रच्छुर्मुनयः पुनः ।
कथं स्नेहोऽभवत् सूत दम्पत्योरुभयोरपि ॥ ५

इति पृष्टस्तदा सूतः प्राहैवं हे मुनीश्वराः ।
मिथ्यावचनदग्धस्सन् गर्भोऽधः पतितो यदा ॥ ६

ततः परं व्याधपत्नी किं मोहादागतं मम ।
किं कर्तव्यं क गन्तव्यमिति चिन्तापराऽभवत् ॥ ७

शिवेन शिक्षितत्वेन सदा भ्रमरकीटवत् ।
भयात् तल्लिङ्गरूपं सा चिन्तयन्ती ह्यवस्थिता ॥ ८

असत्योक्त्या यतस्तस्या गर्भोऽधः पतितः क्षणात् ।
तस्मिन् लिङ्गेऽत्यन्तभयं भक्तिश्चाभूत् तदैव हि ॥ ९

भक्त्या भयेन चाप्यस्याश्चित्तं निर्मलतां गतम् ।
ततः परमियं धैर्यात् शङ्करं शरणं ययौ ॥ १०

दिवारात्रं शिवे भक्त्या भयेन च निरन्तरम् ।
महालिङ्गध्यानपराऽभवद्वेदविदां वराः ॥ ११

आहारनिद्रा रहिता स्थिता धीविलयाच्छिवे ।
चित्तैकाग्र्यात् समुत्पन्नं सुखाधिक्यं द्विजोत्तमाः ॥ १२

प्रपञ्चविस्मृतिश्चाभूत् अप्रयत्नत एव हि ।
कश्चित् कालमुषित्वैवं तत इच्छा स्तुतावभूत् ॥ १३

भूतं भावि च तत् सर्वं परमेशविचेष्टितम् ।
माहात्म्यं चैतत्क्षेत्रस्य भातमस्याः तदा हृदि ॥ १४

ततस्तद्वाक्समुत्पन्ना शिवस्य तु पुरो द्विजाः ।
त्वन्मायापाशबद्धाऽहं एवमुक्तवती शिव ॥ १५
गौरीप्रिय कृपाब्धे मां पाहि श्री वाञ्छ्यनायक ।
त्वल्लीलया समुत्पन्नं जगदेत्तच्चराचरम् ॥ १६
त्वमेव सर्वजीवादिप्रेरकः खलु शङ्कर ।
तृणं च न चलत्येव विनाऽऽज्ञां तव धूर्जटे ॥ १७
कुतो मया किं कृतं स्यात् नातोऽहं दोषसंयुता ।
यन्त्राणि सर्वभूतानि त्वं यन्त्री भवसीश्वर ॥ १८
अहं यन्त्रं भवान् यन्त्री मम दोषो न विद्यते ।
प्राणिकर्मानुसारेण प्रेरकोऽस्मीति चेच्छिव ॥ १९
स्वतन्त्रत्वं विभज्येत तव शास्त्रोक्तमीशितुः ।
मार्कण्डेयादि भक्तानां रक्षणे तव शङ्कर ॥ २०
स्वतन्त्रत्वं हि सन्दृष्टमेवं मां पालय प्रभो ।
त्वमेव मे गतिः शम्भो त्वत्तो नान्या गतिः प्रभो ॥ २१
महादेव नमस्तुभ्यमपराधान् क्षमस्व मे ।
त्रिपुरारे जगन्नाथ श्री चन्दनवनाधिप ॥ २२
गङ्गाधर नमस्तुभ्यमपराधान् क्षमस्व मे ।
आद्यन्तहीन सर्वात्मन् सच्चिदानन्दविग्रह ॥ २३
चन्द्रचूड नमस्तुभ्यं अपराधान् क्षमस्व मे ।
श्रीमङ्गलाम्बिकालीलालोल कालमदापह ॥ २४
कन्दर्पारे नमस्तुभ्यमपराधान् क्षमस्व मे ।
श्री गुप्त गङ्गातीरस्थरम्यालय मनोहर ॥ २५
अष्टमूर्ते नमस्तुभ्यमपराधान् क्षमस्व मे ।
कपालमालास्थिचयभूषाऽलंकृतविग्रह ॥ २६

देवदेव नमस्तुभ्यमपराधान् क्षमस्व मे ।
भस्मच्छन्नाच्छसर्वाङ्ग पन्नगाभरण प्रभो ॥ २७
त्रिलोचन नमस्तुभ्यमपराधान् क्षमस्व मे ।
ब्रह्मादिस्तंबपर्यन्त प्राणिरूपधर प्रभो ॥ २८
सर्वात्मक नमस्तुभ्यमपराधान् क्षमस्व मे ।
स्वीयनीराजनीभूतश्मशानाग्निसमीपग ॥ २९
भक्तप्रिय नमस्तुभ्यमपराधान् क्षमस्व मे !
भर्त्रा साकं यथापूर्वमेव स्थातुं ममाधुना ॥ ३०
वाञ्छाऽस्ति श्रीमहादेव करुणासागर प्रभो ।
मद्भर्तृकोपदावाग्निं शमयित्वाऽद्य मत्पतेः ॥ ३१
मयि स्नेहं यथापूर्वं प्रापयाशु महेश्वर ।
ममापराधसंभूतं मोचयित्वाऽघसंचयम् ॥ ३२
तव सायुज्यमप्यन्ते दद्या मे नीलकन्धर ।
स्तुवन्तीत्थं ननामाथ पतिं पुरत आगतम् ॥ ३३
दैवात् कामविमोहेन स्नेहस्तस्यामभूत्तदा ।
ईशप्रसादसम्भूतमविभक्तत्वमेतयोः ॥ ३४
दम्पत्योरधिका प्रीतिः परस्परमभूत् तदा ।
माहात्म्यन्तु महेशस्य ज्ञात्वा तौ व्याधदम्पती ॥ ३५
भक्तिमीशे प्रकुर्वाणौ तत्रैवावसतां चिरम् ।
सेवया परमेशस्य तत्क्षेत्रावासवैभवात् ॥ ३६
सर्वपापैर्विनिर्मुक्तौ कृतकृत्यौ बभूवतुः ।
चिरकालमुषित्वाऽत्र चन्दनारण्यभूतले ॥ ३७
तौ दम्पती चिरं भुक्त्वा ततस्सायुज्यमापतुः ।
तदाप्रभृति हे विप्राः श्री चन्दनवनेशितुः ॥ ३८

सर्वापराधसहनश्चेति संज्ञाऽभवत् प्रभोः ।
श्रीवाञ्छ्ये तत् कृतं पापं तत्रैवाशु विनश्यति ।। ३९
नैवमन्यत्र हालास्य क्षेत्रादिषु मुनीश्वराः ।
किन्तु देशान्तरकृतं जन्मान्तरकृतं च तत् ।। ४०
विनश्यत्येव हालास्य क्षेत्रादौ कृतपापिनाम् ।
श्री वाञ्छ्ये तु महापापं जन्मकोटि शतार्जितम् ।। ४१
तत्र स्थित्वा कृतं पापमपि सर्वं विनश्यति ।
वक्तुं तत्क्षेत्रमाहात्म्यमपि कालेन भूयसा ।। ४२
वाग्देव्या ब्रह्मणा वापि हरिणाऽपि न शक्यते ।
यमस्य भैरवस्यापि नाधिकारो यतोऽत्र तु ।। ४३
प्राहुः काश्याधिकं क्षेत्रं श्रीवाञ्छ्यं मुनिसत्तमाः ।
काश्यां निःशेषपापानां लयाभावेन भैरवः ।। ४४
पापिनां शासकस्तत्र दण्डपाणिर्विराजते ।
पापानि नाशमायान्ति पुण्यमेवाभिवर्धते ।। ४५
श्रीवाञ्छ्ये भैरवस्तस्मात् सुखासीनो विराजते ।
काश्यान्तु नैव तत्क्षेत्रकृतं पापं विनश्यति ।। ४६
किन्तु देशान्तरकृतं पापजातं विनश्यति ।
काश्यां पुण्यं च पापं च वर्धते वटबीजवत् ।। ४७
नैवं श्रीवाञ्छ्यके क्षेत्रे किन्तु पुण्यं विवर्धते ।
मृतिं गतानां जन्तूनां साम्बः श्री वाञ्छ्यनायकः ।। ४८
तारोपदेशं कुरुते सव्ये कर्णे तदैव हि ।
पुरा विष्णुः श्रियं प्राप्तुं तत्र तप्त्वा महत् तपः ।। ४९
श्रियमीशप्रसादेन प्राप्तवान् मुनिपुङ्गवाः ।
इदं क्षेत्रं श्रियै वाञ्छ्यमिति श्री वाञ्छ्यसंज्ञितम् ।। ५०

तस्येश्वरो महादेवः श्री वाञ्छ्येश इतीरितः ।
अन्यान्यनन्तनामानि सन्ति कारणभेदतः ।। ५१

ईशस्य भक्ताभीष्टार्थदायिनोऽस्य मुनीश्वराः ।
श्री वाञ्छ्यमहालिङ्ग वैभवं वर्षकोटिभिः ।। ५२

हरिब्रह्मादिभिर्देवैः अपि वक्तुं न शक्यते ।
रुद्रो वक्तुं समर्थः किं नो वेत्यत्र च संशयः ।। ५३

तद्वैभवस्य विप्रेन्द्राः इयत्तारहितत्वतः ।
स्वायंभुवं महालिंगं भक्ताभीष्टार्थदायकम् ।। ५४

एतल्लिङ्गसमं नास्ति त्रिषु लोकेषु किश्चन ।
आसप्तपातालतलादाविर्भूत मुनीश्वराः ।। ५५

हिताय सर्वलोकानामेतल्लिङ्गं पुरातनम् ।
पितामहैरसंख्यातैः असंख्यातैश्च विष्णुभिः ।। ५६

असंख्यातैस्सुरेन्द्राद्यैस्तल्लिङ्गं पूजितं मुदा ।
सनातनं तु तल्लिङ्गं सकृद्दृष्ट्वा मुनीश्वराः ।। ५७

मुक्तिं लभन्ते परमां पापिनोऽपि न संशयः ।
श्री वाञ्छ्यस्योत्तरे भागे शिवशूलेन निर्मिता ।। ५८

पुण्यपुष्करिणीनाम्नी तत्रास्तेऽत्यन्तनिर्मला ।
केनचिद्धेतुना तत्र विश्वेशप्रेरिता सती ।। ५९

एकोनांशसहस्रेण गुप्ता वसति जाह्नवी ।
ब्रह्महत्यादिपापानि तत्र मज्जनमात्रतः ।। ६०

विलयं यान्त्यभीष्टं च प्राप्नोति मनुजो भुवि ।
सकृत् स्नानात् पुमांस्तत्र मुक्तिभाक् भवति ध्रुवम् ।। ६१

तत्तीर्थ वैभवं वक्तुं शेषेणापि न शक्यते ।
एवं क्षेत्रेशतीर्थानां माहात्म्यं मुनिपुङ्गवाः ।। ६२

शतेषु च सहस्रेषु कश्चित् जानाति भूतले ।
ये शृण्वन्ति कथां एतां पठन्ति च मुदा जनाः ।। ६३
बुद्धिपूर्वकृतात् पापादपि मुक्ता भवन्ति ते ।
पुत्रपौत्रकलत्रादि धनधान्यादिकं सुखम् ।
अनुभूय ततश्चान्ते कैलासं प्राप्नुयाद्ध्रुवम् ।। ६४

स्कान्दे महापुराणे शिवरहस्यखण्डे सप्तमांशे
त्रिसप्ततितमोऽध्यायः

## एकषष्टितमोऽध्यायः

सूतः-

ये शृण्वन्ति गुरोर्वक्त्राच्छिवं ध्यात्वा हृदम्बुजे ।
श्रीवाञ्छ्यक्षेत्र माहात्म्यं ये पठन्ति शिवाज्ञया ।। १
ते सर्वे शम्भुसायुज्यं लभन्ते नात्र संशयः ।
श्री वाञ्छ्यक्षेत्र माहात्म्यवक्तारं पूजयन्ति ये ।। २
षोडशैरुपचारैश्च ते यान्ति परमां गतिम् ।
एतन्माहात्म्यवक्तारं सर्वशास्त्र विशारदम् ।। ३
आन्दोलिकासमारूढं कृत्वा ग्रामप्रदक्षिणम् ।
तद्गृहे तं प्रवेश्यैव तदाज्ञां शिरसा पुनः ।। ४
वहन्तस्तेन सार्धं ये भुञ्जते तद्गृहे जनाः ।
दत्वा स्वकीयद्रव्याणि सर्वोपकरणानि च ।। ५
तेऽपि यान्ति महत् सौख्यं जीवन्मुक्तिमुपागताः ।
तन्माहात्म्य प्रवक्त्रे तु ये दास्यन्ति धनादिकम् ।। ६
कुबेर सदृशास्स्युस्ते पुत्रपौत्रादिभिस्सह ।
श्री वाञ्छ्यक्षेत्र माहात्म्य पुस्तकं यत्र वर्तते ।। ७

तद्वेश्म नैमिशारण्यादधिकं वेत्ति शङ्करः ।
तस्मात्सर्वं प्रयत्नेन शिवमाहात्म्यवाचकम् ॥ ८
सम्पूज्यैव स्वयं भुंज्यादिति वेदानुशासनम् ।
पुराणवक्त्रे विप्राय दीयते यद्धनादिकम् ॥ ९
शिवाय दत्तमित्येव विष्णुस्सन्तोषमेष्यति ।
शिवभक्ताय दातव्यं शिवभक्तिमता पुनः ॥ १०
अन्नपानादिकं सर्वं शिवसन्तुष्टिहेतवे ।
श्री वाञ्छ्य क्षेत्रमाहात्म्यकथां शृण्वन्ति ये नराः ॥ ११
एते शिवसमाः प्रोक्ता वेदान्तार्थप्रदर्शिभिः ।
यदस्ति देयमित्येव ब्राह्मणेभ्यो विशेषतः ॥ १२
एकस्मै शिव भक्ताय दत्तं साद्गुण्यं अश्नुते ।
पुराण वक्ता सर्वज्ञः सद्ब्राह्मण मुखे पुनः ॥ १३
तत्वं प्रदाय बुद्ध्यैव शुद्धया तीक्ष्णतीक्ष्णया ।
स्वात्मज्ञानं सदा कुर्याच्छ्रोतॄन् स्वात्मविदुत्तमः ॥ १४
शिवोऽहमिति बुद्ध्यैव स्थेयं सद्ब्राह्मणैस्सह ।
इत्येवमनुशास्ता यः स एव ब्राह्मणोत्तमः ॥ १५
पुराणज्ञः स एवेति ब्राह्मणो वेदसम्मतः ।
एवं क्षत्रिय वैश्यादेः पुराण श्रवणादिना ॥ १६
चित्त शुद्ध्या स्वात्मबोधो जायते गुर्वनुग्रहात् ।
गार्गी च हृदि मैत्रेयी स्फुरदीश्वरभावनाम् ॥ १७
अनुभूय चिदानन्द सिन्धुरस्मीति भावनाम् ।
करोतीति श्रुतं सम्यक् बृहदारण्यक श्रुतौ ॥ १८

तस्मात् स्त्रीणां भवेच्छ्रद्धा वेदान्त श्रवणादिषु ।
अधिकारो भवेत् श्रीमद्वाञ्छ्यनाथ प्रसादतः ॥ १९

वाञ्छ्यनाथं नमस्कृत्य  मनसा कर्मणा गिरा ।
वाञ्छ्यनाथोऽस्म्यहं साक्षात् परं ज्योतिः परात् परः ॥ २०

इत्येवं भावना श्रद्धा स्त्रीणां यदि परिस्फुरेत् ।
तदा प्रकाशते ज्योतिरुत्तमा हि गतिर्भवेत् ॥ २१

तथा च सर्वशास्त्रेषु सर्वेषामधिकारिता ।
पुराणवक्तृपादाब्जसेवया जायते पुनः ॥ २२

तस्मात् पुराणवक्तारं नावमन्येत बुद्धिमान् ।
अवमन्ता पुनर्घोरे रौरवे पतितो भवेत् ॥
एतदध्यायपठनात् भुक्तिं मुक्तिं च विन्दति ॥ २३

इति स्कान्दे माहापुराणे सह्याद्रि खण्डे
श्री वाञ्छ्यमाहात्म्ये द्विनवतितमोऽध्यायः
॥ शुभमस्तु ॥



